श्री गुलाब-वीर-ग्रन्थमाला रत्नं तृतीयम्



# जैनसिद्धान्तकौमुदी

(अर्द्धमागधीव्याकरणम्)

शतावधानिपण्डितमुनिश्रीरत्नचन्द्रस्वामिविरचिता

सेयं-

विक्रमपुरवास्तव्याभ्यां भैरवदानज्येष्ठमल्लाभ्यां

स्वमुद्रणालये मुद्रयित्वा

प्रकाश्य नीता



वीरनि० सं० २४५२ विक्रम सं० १९८२ ई० स० १९२५

प्रथमावृत्ति १०००     मूल्य सार्द्धरूप्यकम् रू० १-८-०

## ॥ उपोद्घात ॥

नयप्रमाणाङ्कितगहनतत्त्वसन्दर्भगर्भितजैनप्रवचनप्रतिपादितार्थजिज्ञासावता तज्ज्ञानसंपादनाय प्रवचनभाषाज्ञानसम्पादनमावश्यकम् । तज्ज्ञानं च तद्भाषाया व्याकरणं विना यथावदशक्यम् । यद्यपि जनतोपकाराय पूर्वाचार्यैः प्रवचनप्रचारार्थं प्राकृतसंस्कृतगुर्जरभाषासु भाष्यनिर्युक्त्यवचूरिटीकाबालावबोधा निर्मिता । तानि च साधनानि प्रबोधयन्ति प्रवचनानि प्राकृतजनास्तथापि यद्भाषाया वस्तुस्वरूपं प्रतिपादितं तत्स्वरूपं तद्भाषाया यथा ज्ञायते न तथा भाषान्तरेषु । ततः प्रवचनभाषाया व्याकरणस्यावश्यकता प्रतीयते ।

ननु सन्ति अन्येन व्याकरणानि तथाहि–(१)चण्डस्य प्राकृतलक्षणं(२)वररुचेः प्राकृतप्रकाशः(३)हेमचन्द्रस्य सिद्धहैमशब्दानुशासनस्याष्टमाध्यायः (४) हृषीकेशनिर्मितप्राकृतव्याकरण(५) त्रिविक्रमलक्ष्मीधरसिंहराजविरचितानि वाल्मीकिसूत्रवृत्तिरूपाणि त्रिविक्रमषड्भाषाचन्द्रिकाप्राकृतरूपावताराभिधव्याकरणानि (६) रमन्तराजस्य प्राकृतमञ्जीवनी(७)मार्कण्डेयस्य प्राकृतसर्वस्व(८) भामहस्य षड्भाषाचन्द्रिका(९)दुर्गणाचार्यस्य षड्भाषारूपमालिका (१०) षड्भाषामञ्जरी (११) षड्भाषासुबन्तादर्श (१२) षड्भाषाविचारः(१३)शेषकृष्णस्य प्राकृतचन्द्रिका (१४)अप्पयदीक्षितस्य प्राकृतमणिदीप (१५) पाणिनिकृतप्राकृतलक्षण(१६)प्राकृतमञ्जरी इत्यादि । तेषु कानिचिन्मुद्रितानि, कानिचिदमुद्रितानि, कानिचिदेकभाषा

लक्षणप्रतिपादकानि, कानिचिदनेकभाषालक्षणानिरूपकाणि, सर्वत्रापि मुख्यतया प्राकृतभाषालक्षणनिरूपणमस्ति। तथा चैतेषु व्याकरणेषु सत्सु किमर्थं नव्यव्याकरणरचनाप्रयास? इतिचेदुच्यते—एतानि प्राकृतव्याकरणानि प्रायो महाराष्ट्रीप्राकृतभाषाया एव लक्षणानि निरूपयन्ति न तु जैनप्रवचनभाषाया। प्राकृतलक्षणकार चण्ड विहायान्येषा व्याकरणकाराणा समये महाराष्ट्रीप्राकृतभाषाया एव प्राधान्येन स्वीकृतत्वात्यदुक्त दण्डिना काव्यादर्शे(१ ३५)" महाराष्ट्राश्रया भाषा प्रकृष्ट प्राकृत विदु" ल। च प्राय सर्वैरपि महाराष्ट्रीप्राकृतभाषाया मुख्यत्वमङ्गीकृत्य व्याकरणरचना कृता। केवल चण्डकृतप्राकृतलक्षणे काचित्प्राचीनता विशेषश्च प्रतीयते। तद्व्याकरणमन्यापेक्षयाऽधिकतर प्रवचनभाषामनुसरति, तथापि तदतीव न्यून, विभक्तिविधानस्वरविधानव्यञ्जनविधाननामकप्रकरणत्रयमात्रप्रदर्शितत्वात्सूत्रैरेव समाप्तिं गत कारकसमासतद्धितधात्वादीना तु तत्र किञ्चिदपि विधान नास्ति। हेमचन्द्रसूरिणा यद्यपि वररुचिनिर्मितप्राकृतप्रकाशगतमहाराष्ट्र्यपेक्षयाऽऽद्यतकारस्य विकल्पेन नकारावधानविधिनेनाकारान्परस्योद्वृत्तकारस्य यश्रुतिविधानेन च प्रवचनभाषानुसारा कश्चिद्विशेषा निर्देशित। विशेषमेनमनुलक्ष्यैव कचित्पाश्चात्या विद्वास एना जैनमहाराष्ट्री कथयन्ति तथापि सा प्रवचनभाषात्व ना पन्ना प्रवचनप्रयोगाणा केप.चिदत्र निदर्शनेऽपि आर्षप्रयोगा अनियन्त्रिता इति मत्वा सूरीश्वरेण तेषामुपेक्षा कृता न तेषा सर्वेषा लक्षणानि विरचितानि। बौद्धसिद्धान्त सूत्रमपि पालीभाषाया तट्टीकाऽपि बुद्धघोषादिभि: [illegible] भाषाया-

मेव निरचिता न तथा जैनसाहित्ये सूत्रटीकयोरेकभाषात्व यद्यपि भाष्यनिर्युक्तिनिर्माणसमयपर्यन्तं बौद्धवज्जैनसाहित्यमपि समानभाषानिबद्धमासीत्परन्तु तत्पश्चाज्जैनाचार्याणां मनसि संस्कृतयुगस्य प्रभावः समुद्भूतस्तत एव सम्मतितर्कसिद्धहैमप्रभृतिन्यायव्याकरणाद्यनेकसंस्कृतग्रन्थानां निर्माणेपि प्राकृतभाषाग्रन्थनिर्माणमार्गे न तावदुत्साहः प्रतीतिपथमायाति, तत एव हेमचन्द्रसूरेरपि सर्वानार्षप्रयोगान् संगृह्य तद्व्याकरणनिर्माणे उपेक्षा जाता प्रतीयते । ननु प्रवचनानामपि प्राकृतभाषैव श्रूयते यदुक्तम्—

"बालस्त्रीमन्दमूर्खाणां, नृणां चारित्रकाङ्क्षिणाम् ।
तेषां सुखावबोधाय, सिद्धान्ताः प्राकृते कृताः" ॥१॥

आगमटीकायामप्यनेकस्थलेषु "प्राकृतशैल्या चतुर्थ्यर्थे षष्ठी प्राकृतत्वाद्रेफागमः" इत्यादिवचनैः सिद्धान्तभाषायाः प्राकृतत्वमेव सिद्ध्यति तद्व्याकरणानि च सन्तीति चेच्छ्रूयतां संस्कृतातिरिक्तानां सर्वासां भाषाणां प्राकृतेति सामान्यं नाम यदुक्तं स्थानाङ्गसूत्रस्य सप्तमस्थाने—"सक्कया पागया चेव पसत्था इसीभासिया" पागय (प्राकृत) शब्देन प्राकृतत्वेनाभिमतानां सर्वासां भाषाणां संग्रहः शौरसेनीमागधीपैशाचीचूलपैशाचिकापभ्रंशादयः सर्वा अपि सामान्यरूपेण प्राकृतमुच्यन्ते विशेषापेक्षायां तु प्रत्येकं पृथक् पृथङ्नाम्ना व्यवह्रियते यथा ब्राह्मणक्षत्रियादीनां सामान्यमनुष्यशब्दवाच्यत्वेऽपि ब्राह्मणादयः शब्दाः पृथक्पृथग्जातिवाचकास्तथाऽत्रापि ज्ञेयम्

कस्तर्हि प्रवचनभाषाया नामधेयविशेषः? अर्द्धमागधी, आर्षप्राकृतं वा यदुक्तं समवायाङ्गादौ—

"भयव च णं अद्धमागहीए भासाए धम्ममाइक्खइ"
समः ३४,

श्रीमदभयदेवसूरिस्तद्व्याख्यायामित्थं तदर्थं करोति-"अद्धमागहीयत्ति-प्राकृतादीनां षण्णां भाषाविशेषाणां मध्ये या मागधी नाम भाषा रसौ लशौ मागध्यामित्यादिलक्षणवती साऽसमाश्रितस्वकीयसमग्रलक्षणाऽर्द्धमागधीत्युच्यते" "प्राकृतवार्त्ते' सूरेरयमभिप्राय - अत्राद्धशब्दोऽसमग्रवलक्षक, यस्या भाषाया मागधीभाषाया समग्रलक्षणानि न सन्ति किन्तु कतिचिल्लक्षणानि मागधीभाषाया कतिचिल्लक्षणान्यन्यभाषाणां सा भाषाऽर्द्धमागधीत्युच्यते।

भगवतीसूत्रवृत्तावपि तमेवार्थं व्यक्तीकरोति श्रीमदभयदेवसूरि "अद्धमागही भासा भासिज्जमाणा विसिज्जइ" भग० ५, ४, मागधभाषालक्षणं किंचित्किंचिच्च प्राकृतभाषालक्षणं यस्यामस्ति साऽर्द्ध मागधा इति व्युत्पत्त्याऽर्द्धमागधी एवमेवौपपातिकसूत्रे "अद्धमागहाए भासाए भासति अरिहा धम्मं" औप० ३४, अद्धमगहाए भास एत्ति रसोर्लशौ मागध्यामित्यादि यन्मागधभाषालक्षणं तेनापरिपूर्णा प्राकृतभाषालक्षणबहुला अर्द्धमागधीत्युच्यते" एभ्यस्त्रिभ्योऽवतरणेभ्य इदमेव फलति यत्र किंचिन्मागधभाषालक्षणं बहुलं च प्राकृतभाषालक्षणमस्ति साऽर्द्धमागधीभाषा ज्ञेया

नन्दीसूत्रवृत्तौ श्रीमन्मलयगिरिस्तथापि स्पष्ट वक्ति अत्र "मौ पुमी' ति मागधिकभाषालक्षणात् सर्वमपि हि प्रवचनमर्द्धमागधिकभाषात्मकं अर्द्धमागधिकभाषया तीर्थकृता देशनाप्रवृत्ते, तत प्राय सर्वत्रापि मागधिकभाषालक्षणमनुसरणीयम्।

सिद्धहेमाष्टमाध्याये श्रीमद्धेमचन्द्रसूरिरपितदेव वक्ति-
"पोराणमद्धमागहभासानियय ह्वइ सुत्त"

सूत्राणि ह्यर्थरूपेण तीर्थकरापदिष्टानि सूत्ररूपेण च गणधरग्रथितानि यदुक्तं-"अत्थं भासइ अरहा सुत्तं गथंति गणहरा निउण" तीर्थंकरस्योपदेशोऽर्द्धमागधीभाषायामिति स्पष्टं तथा गणधराणां सूत्ररचनाऽपि तस्यामेवार्द्धमागधीभाषाया भवति। यत्तु तीर्थंकरगणधराभ्यां सूत्रेष्वर्द्धमागधीभाषाया रचितेष्वपि सूत्रलेखनकालपर्यन्त तानि सूत्राणि न तद्वस्थानि किन्तु तत्परिवर्त्तनं सम्पन्नं तथा च तद्भाषापि परिवृत्तेति वदन्ति केचित्तत्तु न सम्यक् नाभिप्रायमेकाक्षरपरिवर्त्तनेऽपि जैनाचार्या महत्पापं स्वीकुर्वन्ति "हीणक्खर अच्चक्खर पयहीण" मित्यादिना हीनाक्षरादिपाठे ज्ञानातिचारा दर्शिताः, ज्ञानातिचाराश्च ज्ञानावरणीयादिकर्मबन्धहेतव इत्यक्षरपरिवर्तनेऽप्येतावान् दोषस्तदा भावपरिवर्त्तने भाषापरिवर्त्तने तु महान् दोषः. परमेष्ठिमन्त्रमात्रस्य भाषापरिवर्त्तने सिद्धसेनदिवाकरस्य गुरुभिर्महत्प्रायश्चित्त दत्तमिति वार्ताऽऽबाल प्रसिद्धा, तत्तत्कालीनाचार्यपरम्परायाः स्खलनयोग्यताभावेन च तत्परिवर्त्तनं जातमित्य प वक्तुं न शक्यते पूर्वधारिणामाचार्याणामस्मदाद्यपेक्षयाधिकबुद्धिपाटवात्। प्रमादेन कस्यचित् स्खलनासम्भवे न सर्वथा स्खलना तादृशा स्वल्पस्खलनया पाठान्तरसम्भवेऽपि सर्वथा भाषायाः परिवर्त्तनमशक्यं, भाषापरिवर्त्तनं तु तदैव स्याद्यदि [illegible]णा, भाषान्तरमनुवादो वा कृतः स्यात्तथा सति तेषां ग्रन्थान्तरत्वे सम्पन्ने सूत्रत्वमपगतं स्यात्। न चेष्टापत्तिः प्रामाण्यभङ्गादतिशयज्ञानिना वचनानामेव प्रामाण्यस्वीकारात्। न चार्षभाषाया

मागधा समवित्तियाता भाषान्मागध्या अद्धमिति व्युत्पत्त्याश्रित' समासो न स्यात् " अर्द्धं नपुंसकम्" २।२।२ इति पाणिनीयसूत्रेण ' समेंऽशेऽर्द्धं न वेति" ३।१।५४ इति सिद्धहैमसूत्रेण च समासत्वचार्द्धशब्दस्यैव नपुंसकत्वपूर्वनिपातयोश्च विहितत्वादिति वाच्यम् । आर्षभाषायां प्रायो मागधीभाषायां समवित्तीत्वात्तत्सत्त्वेन तल्लिङ्गं भिन्न दर्शितरीत्या शास्त्रालापकप्रयोगानुसारेण कर्तव्यत्वात्– "तयावति सव्वावति लोगंसि कम्मसमारंभा जाणियव्वा भवंति" आचा० प्र० श्रु० १, १, १२, अत्र 'तयावति सव्वावति लोगंसि' एते त्रय. शब्दा मागधीभाषालक्षणाश्रिता पश्चिमास्त्रय' शब्दा महाराष्ट्रीप्राकृतलक्षणाश्रिता. । से कीड वा पयग वा कुंथु वा पिपीलियं वा हत्थंसि वा पायंसि वा बाहुंसि वा उरंसि वा उदरंसि वा सीसंसि वा वत्थंसि वा पडिग्गहंसि वा कंबलंसि वा पायपुच्छणंसि वा रयहरणंसि वा गुच्छगंसि वा दंडगंसि वा पीढगंसि वा फलगंसि वा सेज्जंसि वा संथारगंसि वा तहप्पगारे उवगरणजायंसि वा" दस० ४, अत्र सप्तम्यन्ता सर्वेऽपि शब्दा मागधीभाषाश्रिता , महाराष्ट्रीप्राकृताश्रितास्तु पदया पद ।

"अकुमारभूए १ जे २ केई ३ कुमारभूए ४ त्ति ह यत ।
इत्थीहिं गिद्धे ५ वसए अगारमा(र)पकु वइ । सम० ३० ।

अस्मिन्पद्ये एकारान्ता प्रथमैकवचनान्ता. पञ्च शब्दा मागधीभाषालक्षणाश्रिता शेषा महाराष्ट्रीसाधारणा । इद तु चिन्त्यमत्र मागधीशब्द' प्राचीनमागधीभाषायाच को ज्ञेय , हेमचन्द्रसूरिणा प्राकृतव्याकरणे मागधीप्रकरणे या मागधी भाषा दर्शिता सा तु नाटकादिषु प्रयुक्ताऽर्वाचीनमागधी ज्ञातव्या

वस्तुतस्तु अर्द्धमागधीशब्दो न भाषाश्रितः किन्तु देशाश्रितः, तथाहि— मगधदेशस्यार्द्धमर्द्धमगधः, अर्द्धमगधस्य भाषा अर्द्धमागधी शूरसेनमगधदेशयोरन्तरालप्रदेशे या भाषा भाष्यमाणाऽऽसीत्साऽर्द्धमागधी। यदुक्तं निशीथचूर्णौ श्रीजिनदासमहत्तरेण "मगहद्धविसयभासानिबद्धं अद्धमागहं" श्रीमार्कण्डेयमहर्षिणा प्राकृतसर्वस्वे तदेवोक्तं-"शौरसेन्या अदूरत्वादियमेवार्द्धमागधी" अर्थात् शूरसेनदेशस्य भाषा शौरसेनी, मगधदेशस्य भाषा मागधी, मगधशूरसेनमध्यभागस्य भाषाऽर्द्धमागधी। पालीभाषावत् स्वतन्त्रैव भाषा। बहुलांशेन पालीसदृशा स्वल्पांशेन भिन्ना। पालीभाषायां यथा बौद्धसाहित्यं तथाऽर्द्धमागधीभाषायां जैनधर्मस्य पुरातनसाहित्यं। पालीभाषानिबद्धं बौद्धसाहित्यं यथाऽद्यावधि पालीभाषायामेवावतिष्ठते तथाऽर्द्धमागधीनिबद्धं जैनसाहित्यमद्यपर्यन्तं तस्यामेव भाषायामवतिष्ठते। भेदस्त्वयं यद्बौद्धसूत्राणां टीका अपि पालीभाषायामेवासन् तेन तस्या अद्यावधि तथैव प्रचारोऽनेकानि च व्याकरणानि विद्यन्ते ऽर्द्धमागधीभाषायां जैनसूत्राणां टीका न निर्मिता जैनाचार्यैस्तेन तस्याः प्रचारो न तथा नापि तस्या एकमपि व्याकरणं विद्यते।

यत्तु भरतेनोक्तं राक्षसीश्रेष्ठिचेटानुकर्म्यादेरर्द्धमागधी' यथा'अज्जवि णोशामिणीए हिलिस्सादेवीए पुश्नघडुकं अशोए ण उवंशमदि" इय नाटकादिषु प्रयुक्तार्द्धमागधी जैनसाहित्यनिबद्धार्द्धमागधीतोऽतीव भिन्नाऽर्वाचीना च स्पष्टतया प्रतीयते। तथा च मागधीवदर्द्धमागध्यपि प्राचीनाऽर्वाचीनेति भेदद्वयमापन्ना।

### अर्द्धमागधीमहाराष्ट्रीप्राकृतयोर्भेद

अधुना महाराष्ट्रीतोऽर्द्धमागधी भाषा कियतांशेन कथं भिन्नेति प्रदर्श्यते

१ महाराष्ट्र्या नकारस्य सर्वदा णकारो जायतेऽर्द्धमागध्या तु नकारणकारौ द्वावपि यथा–

नाईयमट्ठं न य आगमिस्सं अट्ठं नियच्छन्ति तहागया उ। आचा० १ ३ ३ ११७,

"खण खणं परिण्णाय लोगसन्नं च सव्वसो"

आचा० १ २ ३ १०३,

२ महाराष्ट्रीप्राकृते व्यञ्जनलोपे सत्युद्वृत्तस्याकारस्याकार एव श्रूयतेऽर्द्धमागध्यां तु यकारश्रुतिः, यथा–

| स० | अ० | म० प्रा० |
|---|---|---|
| अवतरण | अवयरण | अवअरण |
| इन्द्रजाल | इंदयाल | इंदआल |

३ म० प्राकृते क ग च ज त द प य वेत्यक्षराणामसंयुक्तानादिभूतानां लोपो भवति, अर्द्धमागध्यां तु ककारस्य गकारयकारौ ग च ज त दानां यकारोऽपि पकारस्यातपादिगणपठितेष्वेव वकारः, यथा–

| स० | अ० मा० | म० प्रा० |
|---|---|---|
| अधिकरण | अहिगरण | अहिअरण |
| व्याकरण | वागरण | वाअरण |
| जगत् | जग, जय | जअ |
| शोच | सोच, सोय | सोअ |
| आतप. | आतवो<br>आयवो | आअओ |

अर्द्धमागधीजैनमहाराष्ट्रीप्राकृतयोर्भेदः

अकारान्तपुंल्लिङ्गविषये-

१ अर्द्धमागध्यां प्रथमैकवचनेऽकारान्तनाम्नो रूपद्वय भवति. प्राकृते रूपमेकमेव भवति, यथा-

अ० मा० प्रा०

जिणे जिणो जिणो १-१

२ द्वितीयाबहुवचनेऽर्द्धमागध्यामेकारान्तमेकमेव रूप भवति, प्राकृते तु रूपद्वय यथा-

अ० मा० प्रा०

जिणे जिणा जिणे २-३

३ तृतीयाबहुवचनेऽर्द्धमागध्या रूपद्वय प्राकृते तु सानुनासिकाधिक्येन रूपत्रय भवति यथा-

अ० मा० प्रा०

जिणेहि जिणेहिं, जिणेहि जिणेहिं जिणेहिँ ३-३

४ पञ्चम्येकवचनेऽर्द्धमागध्या रूपद्वय बाहुल्येन, क्वचित्त्रु रूपत्रय भवति, प्राकृते तु रूपषट्क यथा-

अ० मा० प्रा०

जिणाओ जिणा, क्वचित् जिणाहि } जिणत्तो जिणाओ जिणाउ जिणाहि जिणा जिणाहिंतो ५-१

५ पञ्चमीबहुवचनेऽर्द्धमागध्यां रूपमेकमेव भवति, प्राकृते तु रूपनवक भवति यथा-

अ० मा० प्रा०

जिणेहिंतो- { जिणत्तो जिणाओ जिणाउ जिणाहि जिणेहि जिणाहिंतो जिणेहिंतो जिणासुंतो जिणेसुंतो ५-३

६ सप्तम्येकवचनेऽर्द्धमागध्या रूपत्रयं प्राकृते च रूपद्वयं भवति यथा—

| अ० मा० | प्रा० |
| --- | --- |
| जिणंसि जिणम्मि जिणे, | जिणम्मि जिणे |

७-१

७ न्तमतवन्ययान्तशब्दानां प्रथमाद्वितीयातृतीयाषष्ठीविभक्तिषु किंचिद्विशिष्टरूपाणि भवन्ति, तथाहि—

| | ए०व० | ब०व० |
| --- | --- | --- |
| प्र० | भगवं, भगवन्तो<br>मतिमं, मतिमन्तो | भगवन्तो<br>मतिमन्तो |
| द्वि० | | भगवन्तो<br>मतिमन्तो |
| तृ० | भगवता, भगवया<br>मतिमता | |
| ष० | भगवतो, भगवओ | |

प्राकृते रूपविशेषो न दृश्यते ।

८ अर्द्धमागध्यां जसादिशब्दानां तृतीयाषष्ठीसप्तमीषु विशिष्टरूपाणि भवन्ति, तथाहि—

| | ए०व० |
| --- | --- |
| तृ० | जससा, मणसा, वयसा, कायसा, तेयसा, चक्खुसा, जोगसा, पज्जसा, बलसा, |
| ष० | जससो, मणसो, |
| स० | मणसि इत्यादि, प्राकृते त्वेतानि रूपाणि न दृश्यन्ते |

९ कम्मधम्मशब्दयोस्तृतीयैकवचने कम्मुणा धम्मुणा

इतिरूपे अर्द्धमागध्यां भवत', प्राकृते तु न दृश्येते

१० रायशब्दस्य सबोधनैकवचने हे रायमिति रूप- मर्द्धमागध्यां दृश्यते न तु प्राकृते ।

इकारान्तपुंल्लिङ्ग

११ प्रथमाबहुवचनेऽर्द्धमागध्यां रूपद्वयं भवति प्राकृते तु रूपचतुष्टय, तथाहि–

| अ०मा० | प्रा० |
|---|---|
| इसिणो इसी | इसिणो, इसी, इसओ, इसउ-<br>१–२ |

१२ पञ्चम्येकवचनेऽर्द्धमागध्यां रूपद्वय प्राकृते तु रूपपञ्चकम्-

| अ०मा० | प्रा० |
|---|---|
| इसिणो, इसीओ | इसिणो, इसित्तो, इसीओ,<br>इसीउ, इसीहिंतो |

१३ पञ्चमीबहुवचनेऽपि प्राकृते रूपाधिक्यम्–

| अ०मा० | प्रा० |
|---|---|
| इसीहिन्तो, | इसित्तो, इसीओ, इसीउ,<br>इसीहिन्तो, इसीसुन्तो |

१४ सप्तम्येकवचनेऽर्द्धमागधीसत्क 'इसिंसि' रूप प्राकृते नास्ति।

उकारान्तपुंल्लिङ्ग

१५ प्रथमाबहुवचने पञ्चम्येकवचनबहुवचनयोः सप्तम्येकवचने चेकारान्तवत्तारतम्यम्,

१६ बहुशब्दस्य प्रथमाबहुवचनेऽर्द्धमागध्या जायमानें बहवे इतिरूप प्राकृते नास्ति,

सर्वनामशब्देषु

१७ सप्तम्येकवचनेऽर्द्धमागध्यामिमकशब्दाभ्यामेव 'सिं' प्रत्यय प्राकृते तु सर्वेषु सर्वनामशब्देषु 'सिं' प्रत्ययः,

१८ कजतदमशब्दाना तृतीयैकवचने प्राकृते किणा जिणा तिणा इमिणा इतिरूपाणि दृश्यन्तेऽर्द्धमागध्या तु तन्नास्ति

१९ तेषामेव षष्ठ्येकवचनबहुवचनयो प्राकृते कास, जास, तास इति रूपाणि दृश्यन्तेऽर्द्धमागध्या तानि न सन्ति।

२० कशब्दस्य पञ्चम्येकवचने 'किणा' इतिरूप प्राकृते विद्यतेऽर्द्धमागध्या नास्ति

२१ षष्ठ्येकवचने से इतिरूप तशब्दस्यैवार्द्धमागध्या दृश्यते प्राकृते त्वेमैतशब्दयोरपि

२२ अमुशब्दस्य सप्तम्येकवचने अयम्मि इयम्मि इ-ति रूपद्वय प्राकृते दृश्यतेऽर्द्धमागध्या तु न।

अस्मद्युष्मच्छब्दयो.

२३ अनयो शब्दयो रूपेषु महान् भेदोऽस्ति,तुलनार्थं तयो रूपाणि प्रदर्श्यन्ते–

| | अ० मा० | प्रा० |
|---|---|---|
| प्र० ए० | ह अह, | म्मि,अम्मि,अम्हि,ह,अह,अहय, |
| प्र० ब० | अम्हे, वय, | अम्ह, अम्हे, अम्हो, मो, वय, भे, |
| द्वि०ए० | मे,म,मम,ममं। | णे, णं,मि,अम्मि,अम्ह,मम्ह,म, मम, मिमं, अह। |

द्वि०व० णो, अम्हे — अम्हे, अम्हो, अम्ह, णे.

तृ०ए० मया, मए — मि, मे, मम, ममए, ममाइ, मइ, मए, मयाइ, णे.

तृ०व० अम्हेहि — अम्हेहि, अम्हाहि (हिं) अम्ह, अम्हे, णे

प०ए० ममाओ, ममाहिंतो। मइणो, मइत्तो, ममत्तो, महत्तो, मज्झत्तो, मईओ, ममाओ, महाओ मज्झाओ, मईउ, ममाउ, महाउ, मज्झाउ, ममाहि, महाहि, मज्झाहि, मईहिंतो, ममाहिंतो महाहिंतो, मज्झाहिंतो, मई, ममा, महा, मज्झा

प०व० अम्हेहिंतो। ममत्तो, अम्हत्तो, ममाओ, अम्हाओ ममाउ, अम्हाउ, ममाहि, अम्हाहि, ममेहि अम्हेहि, ममाहिंतो, ममेहिंतो, अम्हाहिंतो अम्हेहिंतो, ममासुंतो, ममेसुंतो, अम्हासुंतो, अम्हेसुंतो.

प०ए० मम, मम, मज्झ, मज्झ, महं, मे, — मे, मइ, मम, मह, महं, मज्झ, मज्झ, अम्ह, अम्ह

प०व० अम्ह, णे, अस्साकं अम्हाण — णे, णो, मज्झ, अम्ह, अम्ह, अम्हे, अम्हो, अम्हाण-ण, ममाण-ण, महाण-ण, मज्झाण-ण

स० ए० ममसि, मम्हि । मइ, मि, ममाइ, मए, मे, अम्हम्मि, ममम्मि, मह्म्मि, मज्झम्मि, अम्हंसि, ममंसि, महंसि, मज्झंसि, इत्यादि ।

स० ब० अम्हेसु । अम्हसु (सुं) अम्हेसु (सुं) ममसु (सुं) ममेसु (सुं) महसु (सुं) महेसु (सुं) मज्झसु (सुं) मज्झेसु (सुं)

२६ एतावानेव भेदस्तुम्हशब्दरूपेष्वपि विस्तरभयान्नेह रूपाणि लिख्यन्ते तुलना चिकीर्षुभिस्तत्तद्व्याकरणे निरीक्षणीयम् ॥

स्त्रीलिङ्गविषये

२७ स्त्रीलिङ्गे प्रथमाद्वितीयाबहुवचने प्राकृते रूपत्रयम र्द्धमागध्यां रूपद्वयं भवति तथाहि—

| अ०मा० | प्रा० |
|---|---|
| मालाओ, माला | मालाओ, मालाउ, माला |
| बुद्धीओ, बुद्धी | बुद्धीओ, बुद्धीउ, बुद्धी |
| धेणूओ, धेणू | धेणूओ, धेणूउ, धेणू |
| णईओ, णई | णईओ, णईउ, णई (णईआ) |
| वहूओ, वहू | वहूओ, वहूउ, वहू, |

२८ तृतीयाषष्ठीसप्तम्येकवचनेऽर्द्धमागध्यामेकैकमेव रूपं भवति प्राकृते तु रूपचतुष्टयं भवति तथाहि–

| अ०मा० | | प्रा० |
|---|---|---|
| तृ०प०स० | मालाए | मालाअ, मालाआ, मालाइ, मालाए |
| ,, ,, ,, | बुद्धीए | बुद्धीअ, बुद्धीआ, बुद्धीइ, बुद्धीए |
| ,, ,, ,, | धेणूए | धेणूअ, धेणूआ, धेणूइ, धेणूए |
| | गाईए | गाईअ, गाईआ, गाईइ, गाईए |
| | बहूए | बहूअ, बहूआ, बहूइ, बहूए |

२९ पञ्चम्या एकवचनबहुवचनयोः प्राकृते रूपाणामाधिक्य पुंल्लिङ्गवदेव प्रत्ययानामाधिक्यादर्द्धमागध्या तु रूपमेकैकमेव।

३० कजतशब्दातिरिक्तसर्वनामशब्देषु स्त्रीलिंगे प्राकृते कश्चिद्विशेषो नास्ति, अर्द्धमागध्यां तु षष्ठीबहुवचने 'सव्वासिं' इति विशेषरूप विद्यते.

३१ कजतशब्दाना स्त्रीलिङ्गे पष्ठ्येकवचने प्राकृते किस्सा, कास, जिस्सा, जास, तिस्सा, तास, इति रूपाणि दृश्यन्तेऽर्द्धमागध्यां तु तानि रूपाणि न सन्ति

३२ इमशब्दस्य षष्ठ्येकवचने 'इमीसे,' सप्तम्येकवचने 'इमीसाए, रूपमर्द्धमागध्यां दृश्येते प्राकृते तु न विद्येते।

नपुंसकलिङ्गे—

३३ प्रथमाद्वितीयैकवचन इकारान्तोकारान्तयोरर्द्धमागध्यां रूपमेकमेव दृश्यते प्राकृते तु द्वे—

| अ०मा० | प्रा० |
|---|---|
| दहिं | दहि, दहिं. |
| महुं | महु, महुं |

३४ प्रथमाद्वितीयाबहुवचनेऽर्द्धमागध्या तृतीयं रूपं

निरनुनासिक प्राकृते तु सानुनासिकमस्ति तथाहि—

| अ० मा० | पा० |
|---|---|
| वणाणि वणाइ वणाइं | वणाणि, वणाइ, वणाइँ, |
| दहीणि दहीइ दहीइं | दहीणि, दहीइ, दहीइँ |
| महूणि, महूइ, महूइं | महूणि महूइ महूइँ |

कारकविषये—

३५ प्राकृते सप्तम्या स्थाने द्वितीयाविधानं कृतमार्षे तु तृतीयापि दृश्यते, यथा "तेण कालेण तेण समएण" "जेणामेव सेणिए राया तेणामेवोवागच्छइ"

३६ अर्द्धमागध्या कर्त्तिकर्त्तव्य चतुर्थी दृश्यते यथा— के पुरिस गमणाए के पच्छा गमणाए (गमनकर्तैतव्ये) प्राकृते तादृशा प्रयोगो न दृश्यते

३७ मज्झमज्झेणशब्दप्रयोगे द्वितीया षष्ठी सप्तमी चार्द्धमागध्या दृश्यते यथा 'नयरस्स मज्झमज्झेणं' 'नयरं मज्झमज्झेणं' 'नयरे मज्झमज्झेणं' प्राकृते तथा नास्ति

समासविषये

३८ तमुक्काए णं भंते केमहालए एमहालए णं गायमा! तमुक्काए पण्णत्ते इत्यादि प्रयोगेषु केमहालए एमहालए इति समासः प्राकृत व्याकरणेन न सिद्ध्यति।

३९ अजरामरणमणुकोसो, अट्ठकरसमसुरा, अगमगाइ, सामाइयमाइयाइ, सचारो, पाओवगमणं पुन्विपि, पुच्छपि, आण तमार आणत्तार, अयं सघो अयमेयारूवे, इमेयारूवे, जसोकामी, जसोचदो, अयोकरल अयो

कुंभी, तवोकम्म, आयापाणू, इत्यादयोऽर्द्धमागधीप्रयोगाः प्राकृतव्याकरणेन न सिद्ध्यन्ति।

तद्धिते

४० बहुतराए, अप्पतराए, पुरच्छिम, पुरत्थिम पचच्छिम, पचत्थिम, परज्झो (पराधीन इत्यर्थः) वण्णव, वण्णवतो, भगव, भगवन्तो, आउसो, आउसन्तो, गोमी, गोमिणी, सहहड, धुसिमन्तो, धम्मिणो, किमियो, रइला (रजस्वला) ओयसी, ओयस्सी, वचसी, वचस्सी, कोत्तुण्ण (कारणवमित्यर्थ) परेवच, आइवच, कीसो, केसो, कोरिसो, (कीदृश इत्यर्थ) दोच, तच, जाए, पगाभाए, केवचिर, केवचिर, जामेव, तामेव, जेणामेव, तेणामेव, इत्यादय शब्दा अर्द्धमागध्या प्रसिद्धास्तद्धितसिद्धा. प्राकृते तु न दृश्यन्ते।

धातुप्रत्ययविषये

१ अर्द्धमागध्या गणत्रयविभागप्रदर्शनेन द्वितीयगणपठितानामेकारविकरणप्रत्ययः तृतीयगणपठिताना तु विकल्पेनैकारविकरण. प्राकृते तु सर्वेषामकारान्तधातूनामेकारविकरणः तेन गच्छेइ गच्छेमि इत्यादिरूपाणि प्राकृते भवन्ति नतु अर्द्धमागध्याम्।

२ वर्त्तमानकालेऽर्द्धमागध्या त्रिष्वपि पुरुषेषु एकैक रूप प्राकृते रूपाणामाधिक्य तथाहि—

| | अ०मा० | प्रा० |
|---|---|---|
| प्र०ए० | गच्छइ | गच्छइ गच्छए |
| प्र०ब० | गच्छन्ति | गच्छन्ति, गच्छन्ते, गच्छिरे |
| म०ए० | गच्छसि | गच्छसि, गच्छसे |

| | | |
|---|---|---|
| म०प | गच्छह | गच्छह, गच्छित्था |
| उ०ए | गच्छामि | गच्छामि, गच्छमि |
| उ०प० | गच्छामो | गच्छामो, गच्छिमो, गच्छमो |
| | | गच्छामु, गच्छिमु, गच्छमु |
| | | गच्छाम गच्छिम, गच्छम, |

३ आज्ञार्थेऽर्द्धमागध्या मध्यमपुरुषैकवचने गच्छा- 'हि गच्छ इति रूपद्वय भवति, प्राकृते तु गच्छसु, गच्छहि गच्छ इति रूपत्रय भवति। उत्तमपुरुषैकवचनबहुवच नयोः प्राकृते वर्त्तमानकालवद्रूपयोस्तुल्यम्

४ भूतकालेऽर्द्धमागध्या त्रिष्वपि पुरुषेषु वचनयोरे- क एवंसुप्रत्ययो भवति यथा 'गच्छिसु' प्राकृते तु स्व रान्तधातो सीहीहीअप्रत्यया व्यञ्जनान्तधातोरीअप्र त्ययो, यथा–होसी, होही, होहीअ, गच्छीअ

५ भविष्यदर्थेऽर्द्धमागध्या त्रिष्वपि पुरुषेषु स्सहिप्र त्ययो स्यादिपरो भवत, प्राकृते तु प्रथममध्यमपुरुषयोर्हि प्रत्यय एव स्यादिपरो न तु स्सप्रत्ययः।

६ वर्त्तमानोत्तमपुरुषैकवचनबहुवचनयोरर्द्धमागध्या- मसधातो' अंसि, मि, मो इति रूपाणि भवन्ति, प्राकृते तु म्हि, म्हो, म्ह इति रूपाणि भवन्ति

७ भूतकालेऽसधातोरर्द्धमागध्या आसी, आसिमो इत्यादि रूपाणि भवन्ति प्राकृते तु आसि, अहेसित्ति रूपाणि

८ अकासि, अकारिस्स, अकरिंसु, अभविंसु अतरिं सु भुविं, भुवी, लहित्थ, अणुसासमि, होत्था; हुत्था, आहसु, अब्बवी, आघ, घेच्छिइ, नेच्छी, समुच्छिहि- न्ति, सधयाति, पीहाइ, इत्यादय प्रयोगा अर्द्धमागध्या

प्रसिद्धाः प्राकृते न दृश्यन्ते

६ भावकर्मणोरर्द्धमागध्यां सामान्यत इज्जप्रत्ययो भवति, प्राकृते त्विज्जे अप्रत्ययौ भवतः

| अ०मा० | प्रा० |
|---|---|
| पढिज्जइ | पढीअइ, पढिज्जइ, |

१० करधातोरर्द्धमागध्या भावकर्मणोः कज्जइ कीरइ इत्यादिरूपाणि दृश्यन्ते प्राकृते तु न.

११ सयधार्थकृदन्ते प्राकृते 'तुआण' प्रत्ययो भवति सोऽर्द्धमागध्या न दृश्यते प्राकृत इअ प्रत्ययो भवति तत्स्थानेऽर्द्धमागध्यामियाप्रत्ययोपि भवति क्वचित् तु प्रत्ययो भवति यथा चइत्तु, सरित्तु इत्यादि प्राकृते तु तादृशरूपाणि न सन्ति

१२ सोचा, पेचा, लद्धुं, लद्धूण, दिस्सा, इत्यादीनि सयधार्थकृदन्तरूपाणि प्राकृते न दृश्यन्ते

१३ अर्द्धमागध्या हेत्वर्थकृदन्ते 'त्तए' प्रत्ययो भवति यथा 'करित्तए' वागरित्तए, स प्राकृते न दृश्यते

१४ अर्द्धमागध्या भूतार्थे "पल्हत्थे वोयत्थो कडो (कृतः) अणुडागय, छण्णिय (छिन्न) परिवुडो, सवुडो, ऊसढो ऊसडो" इत्यादयः शब्दाः सिद्धास्ते प्राकृते न सिद्ध्यन्ति

१५ सिद्धहैमाष्टमाध्यायचतुर्थपादस्य द्वितीयसूत्रादारभ्य षट्पञ्चाशत्तमसूत्रपर्यन्त ये धात्वादेशा दर्शिताः प्राकृतभाषाया तेषु स्वल्पा एवादेशा आर्षे प्रयुक्ता, बहुलास्तु न सन्त्येव तथाहि कथधातोर्दशादेशा विहितास्तेषु नवादेशानामेकोपि प्रयोगोऽर्द्धमागध्या नास्ति । एव धात्वन्तरेष्वपि ज्ञेयमतिविस्तरभयान्नेह प्रपञ्च्यते इत्थ

महाराष्ट्रीजैनमहाराष्ट्रीप्राकृतभाषानोऽर्द्धमाग ध्या भेद' स्पष्ट प्रतीयते तथा च तद्भाषायाः स्वतन्त्रव्याकरणेनावश्य भवितव्यमिति मनोरथो मनसि क्रियता कालेना सीदर्द्धमाग धीकोषनिर्माणानन्तर स दढनरोऽभवत्तावनो दारचित्ताग्रणीश्रीमदगरचन्दभैरोदानश्रेष्ठिवराणा राज स्थानान्तर्गतविक्रमपुर (बीकानेर) निवासिना तस्मिन् कार्ये प्ररणा जाता तदुत्साहितो मैथिलपण्डितश्रीयदुनाथ मिश्रस्य साहाय्येन गहनमप्येतत्कार्यं मामनतरेन पारयितु समर्थोऽभवम् ।

इय भाषा सस्कृतमूला वा स्वतन्त्रेति विमर्शस्तु नेह क्रियते प्राकृतपाठमालाया उपोद्घाते विस्तरेण तच्चिन्तनात्त त्रैव प्रेक्षावद्भिर्निरीक्षणीयम ।

सस्कृतसिद्धान्तकौमुद्यनुसारिशैलीविशिष्टत्वाज्जैनागम भाषालक्षणप्रदर्शनद्वाराजैनसिद्धान्ताना कौमुदीवत्प्रकाशक त्वाच्चास्य व्याकरणस्य जैनसिद्धान्तकौमुदीति नामधेयमुचि तमेव प्रतिभाति

प्राय आगमोदयसमितिमुद्रितजैनसूत्राणामर्द्धमागधी कोषस्य चाधारेणास्य रचना समजनि । यद्यप्यन्यापेक्षया स मितिमुद्रणा सशुद्ध विद्यते परन्तु कालप्रवाहेण लेखकाना स्खलनया सूत्रेष्वनेकानि पाठान्तराणि जातानि—स्थकारचन्द्र कारयो सादृश्येन क्वचित पुरत्थिम , क्वचित्पुरच्छिम , क्वचिदृक्षिणेयणा, क्वचिद्क्खिणेयणा, गकाक्षरयो सादृश्येन पडिगाहेइ पडिगाहेड इत्याद्यनेकानि सन्देहस्थानानि सन्ति तादृशस्थलेषु क्वचित्सम्मति निर्णय कृत क्वचित्तूभयपाठ समादृत ।

अल्पश्रमेण विद्यार्थिना बोधो यथा स्यात्तथाविधशैली समादरेणात्र प्रकृतिप्रत्ययादिविभाग. स्वीकृतः ।

सूत्रेषु शब्दाना धातूना च प्रयोगा यथा यथा दृष्टास्तथा तथा ते साधिताः । गवादिशब्दाना सर्वविभक्तिरूपाणि सूत्रे नोपलभ्यन्ते-तेन यावन्ति रूपाणि लब्धानि तावन्त्येव साधितानि केषाचिदनुपलब्धान्यपि रूपाणि व्याकरणान्तरानुसारेण साधितानि ।

यद्यप्येतद्व्याकरणरचनायाः प्राथम्यात्सद्य्रस्त्यात्सम्भवोऽस्ति स्खलनायाः तथापि सहृदया विद्वरा हितबुद्ध्या सूचयिष्यन्ति मा चेत्तत्स्खलनं तदा द्वितीयावृत्तौतत्संशोधन भविष्यति सुज्ञेषु किं बहुना ।

ॐ शान्ति' शान्ति. शान्तिः

स्थल—मोरवी वि०स० १९८२।
कार्तिक शुक्ल त्रयोदशी मुनिरत्नचन्द्रः



* ॐ नमो वीतरागाय *

शतावधानिपण्डितप्रवरमुनिश्रीरत्नचन्द्रस्वामिविरचिता,

# जैनसिद्धान्तकौमुदी

## [अर्द्धमागधीव्याकरणम्]

## पूर्वार्द्धम्

प्रणम्य श्रीमहावीरं मोक्षमार्गप्रकाशकम् ।
क्रियते तत्त्वबोधाय जैनसिद्धान्तकौमुदी ॥१॥

## अथ संज्ञाप्रकरणम्

अ आ इ ई उ ऊ ए ओ स्वराः ॥ १।१।१॥

एते स्वरसंज्ञाः स्युः ॥

क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण
त थ द ध न प फ ब भ म य र ल व स ह
व्यञ्जनानि ॥ १।१।२॥

इमे वर्णा व्यञ्जनसंज्ञकाः । तत्र कादिङान्ताः कवर्गः । चादिञान्ताश्चवर्गः । टादिणान्ताष्टवर्गः । तादिनान्तास्तवर्गः । पादिमान्ताः पवर्गः ।

अ इ उ ह्रस्वाः ॥१।१।३॥

एते त्रयो ह्रस्वसंज्ञा भवन्ति ॥

आ ई ऊ दीर्घाः ॥१।१।४॥

एते त्रयो दीर्घसंज्ञकाः ॥

वर्णोपरि बिन्दुरनुस्वारः ॥१।१।५॥

वर्णोपरि विद्यमानो बिन्दुरनुस्वारसंज्ञको भवति ॥

स्वराणामन्त्यष्टिः ॥१।१।६॥

स्वराणां मध्ये योऽन्त्यः स टिसंज्ञः स्यात् ॥

अन्त्यात्पूर्व उपधा ॥१।१।७॥

अन्त्यवर्णात्पूर्वो वर्ण उपधासंज्ञः स्यात् ॥

अप्रयुज्यमानः सफल इत् ॥ १।१।८॥

प्रयोगेऽप्रयुक्तः किञ्चित्कार्यं विधातुमुपात्तो वर्ण इत्संज्ञः स्यात् ॥

उ प्रत्ययादिः ॥१।१।९॥

प्रत्ययस्यादिरुकार इत्संज्ञः स्यात् ॥

इतो लोपः ॥४।४।६०॥

इत्संज्ञकस्य लोपः स्यात् ॥

डिति टेः ॥४।४।६१॥

डिति परे टेर्लोपः स्यात् ॥

स्वरानन्तराणि व्यञ्जनानि संयुक्तम् ॥१।१।१०॥

बहुवचनमनेकार्थम् । स्वराव्यवहितयोर्व्यञ्जनयोर्व्यञ्जनानां वा संयुक्तसंज्ञा स्यात् ॥

॥ इति संज्ञाप्रकरणम् ॥

---

१ ए ओ इत्येतयोर्दीर्घत्वेऽपि पञ्चमात्रादीर्घसंज्ञा न कृता ग्रन्थकर्त्रा ।

# अथ परिभाषाप्रकरणम् ॥

## आदेदोतामादिदुतो ह्रस्वाः ॥१।१।३५॥

तकार उच्चारणार्थः । ह्रस्वादेशो विधीयमान आकारस्याकार एकारस्यैकार ओकारस्योकारो बोध्यः ॥

## अदिदुतामादेदोतो वृद्धिः ॥१।१।३६॥

अकारेकारोकाराणां वृद्ध्यादेशो विधीयमानः क्रमादाकारैकारौकारा ज्ञेयाः ॥

## अदातौविदीतावुदूतौ सवर्णौ ॥१।१।३७॥

सवर्णादेशो विधीयमानः क्रमेणोक्तयोरेकस्यापरो बोध्यः॥

## व्यञ्जनेषु प्रथमद्वितीययोस्तृतीयचतुर्थयोश्च प्रथमतृतीयौ ॥१।१।३८॥

व्यञ्जनवर्णेषु कचटतपवर्गाणां कखयोर्गघयोश्च कगौ, चछयोर्जझयोश्च चजौ, टठयोर्डढयोश्च टडौ, तथयोर्दधयोश्च तदौ, पफयोर्बभयोश्च पबौ, सवर्णौ ज्ञेयौ ॥

## समानयोर्विरोधे परम् ॥१।१।३९॥

तुल्यबलकविरुद्धकार्यद्वयप्रसङ्गे परं कार्यं स्यात् ॥

## षष्ठ्या अन्त्यस्य ॥१।१।४०॥

षष्ठीनिर्देशेन क्रियमाणं कार्यमन्त्यस्य बोध्यम् ॥

## विशेषणं तदन्तस्य ॥१।१।४१॥

विशेषणीभूतं तदन्तस्य संज्ञा स्यात् ॥

अनेकवर्णसित्सर्वस्य ॥१।१।४२॥

अनेकवर्णकादेशः सकारेत्सञ्ज्ञकादेशश्चसर्वस्य स्थाने भवतः ॥

टकितावाद्यन्तयोः ॥१।१।४३॥

टित् कित् कार्यं यस्य विहितं क्रमात्तस्याद्यन्तयोः स्यात् ॥

॥ इति परिभाषाप्रकरणम् ॥

# अथ स्वरसन्धिप्रकरणम् ।

एकः पूर्वपरयोः ॥१।२।४॥

अधिकारोऽयम् ॥

बहुलम् ॥१।२।१॥

अधिकारोऽयम् ॥

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥१॥

स्वरयोरव्यवधाने प्रकृतिभावो लोपो वैकस्य ॥१।२।२॥

स्वरयोरव्यवधानेन समभिव्याहारे प्रकृतिभावः पूर्वपरयोरन्यतरस्य लोपो वा स्याद्यथाप्रयोगम् । बे+इंदिया=बेइन्दिया[1] । ते+इंदिया=तेइंदिया[2] । पजलि+उडा=पजलिउडा[3] । इक+असीई=इकसीई[4] । तहा+इत्ति=तहत्ति[5] । ते+असी=तेसी[6] ॥

---

१ द्वीन्द्रिया । २त्रीन्द्रिया । ३प्राञ्जलिपुटा । ४एकाशीतिः । ५तथेति । ६त्र्यशीतिः

तदभावे सन्धिः ॥१।२।३॥

तथाभूतयोः स्वरयोः प्रकृतिभावलोपाभावपक्षे वक्ष्यमाणाः सन्धयः स्युः ॥

वृद्धिरत स्वरे परस्य ॥१।२।६॥

अकारात्स्वरे परे पूर्वपरयोः परसवर्णा वृद्धिरेकादेशः स्यात्। जिण+ईसरो=जिणेसरो[1]। चाउल+उदगं=चाउलोदगं[2]। समण+उवासगो=समणोवासगो[3] ॥

सवर्णे दीर्घः ॥१।२।७॥

स्वरात्सवर्णे स्वरे परे पूर्वपरयोर्दीर्घ एकादेशः स्यात्। पास+अवच्चिज्जो=पासावच्चिज्जो[4]। गमण+आगमणे=गमणागमणे[5]। अइ+इति=अईति[6]। भाणु+उदओ=भाणूदओ[7] ॥

इदीदुदूतामसवर्णे पूर्वः ॥१।२।६॥

इकारेकारयोरुकारोकारयोश्चासवर्णे स्वरे परे पूर्ववर्णक्रमानुपूर्व्या यवर्णादेशः स्यात्। पलि+अंको=पल्लंको[8]। समनु+इतो=समन्नितो[9]।

समानयो पूर्वस्य सवर्णः ॥१।२।५॥

एकानुपूर्वीकवर्णद्वयस्याव्यवधाने पूर्वस्य स्वसदृशवर्णादेशः स्यात्। अभि+उट्ठेमि=अब्भुट्ठेमि[10]।

---

१ जिनेश्वर। २ तन्दुलोदकम्। ३ श्रमणोपासक। ४ पार्श्वापत्यीय। ५ गमनागमने। ६ अतीति। ७ भानूदय। ८ पल्यङ्क। ९ समन्वित। १० अभ्युत्तिष्ठामि।

तरहेभ्यश्चजझा ॥१।२।१०॥

तकाररेफहकारेभ्यः परेषां तेषां क्रमेण चजझ इत्येते आदेशाः स्युरसवर्णे स्वरे । पति+अप्पिणइ=पच्चप्पिणइ । "रफस्य परसवर्णे" परि+उवासणा=पज्जुवासणा । अरिह+आवणा इति स्थिते, सवर्णदीर्घे ईकारस्य अकारो हकारस्य परसवर्णेन जकार." अज्झावणा । अहि+अयण=अज्झयण ॥

स्वराद्दातोर्यट् ॥४।४।१॥

स्वरात्परयोरकाराकारयोः क्वचिद् यडागम स्यात् । विपरि+आसो=विपरियासो । पलि+अंको=पलियंको ।

स्वराद्यस्य ॥४।४।६२॥

स्वरात्परस्य यकारस्य बहुल लोप. स्यात्स्वरे परे । जिय+इंदिए=जिइंदिए । गय+इंदो=गइंदो ॥

संयुक्ते ह्रस्वः १।२।१२

संयुक्ते परे पूर्वस्य बहुल ह्रस्व. स्यात् । आ+कोसइ=अक्कोसइ । की+रणो=किण्णो । गच्छ+इज्जा=गच्छिज्जा, गच्छेज्जा । हो+ज्जा=हुज्जा, होज्जा ।

उदुर्निर्वोना संयुक्ते ॥१।२।११॥

एषां स्वरस्य संयुक्ते परे दीर्घो बहुल स्यात् ।

---

१ प्रत्यर्पयति । २ पर्युपासना । ३ अध्यापना । ४ अध्ययनम् । ५ विपर्यास । ६ पल्यङ्क. । ७ जितेन्द्रिय । ८ गजेन्द्र ९ आक्रोशति । १० कीर्ण । ११ गच्छेत् । १२ भवन् ।

उपसर्गस्य दीर्घात् ॥१।२।२४॥

उपसर्गसम्बन्धिदीर्घात्परस्य संयुक्तस्यादेर्लोपः स्यात् । उद्+स्ससन्ति=ऊससन्ति[1] । दुर्+सहो=दूसहो, दुस्सहो[2] । निर्+णेइ=णीणेइ[3] । वि+स्समइ=वीसमइ[4] । आ+स्सासि=आसासि[5] ।

पत्तादिषु नित्यम् ॥१।२।१३॥

एषु संयुक्ते परे पूर्वस्य ह्रस्वो नित्यम् । पा+त्त=पत्त[6] । सपत्त[7] । भारिया+त्ता=भारियत्ता[8]

॥ इति स्वरसन्धिप्रकरणम् ॥

---

# अथ व्यञ्जनसन्धिः ॥

अहे व्यञ्जनस्य परसवर्णः ॥१।२।२०॥

हभिन्ने व्यञ्जने परे पूर्वव्यञ्जनस्य परसवर्ण आदेशः स्यात् । सत्+कारो=सक्कारो[9] । उत्+कमो=उक्कमो[10] । निर्+चरइ=निच्चरइ[11] । इष्+ढी=इड्ढी[12] ॥

त्रयाणामव्यवधाने पूर्वस्य लोपः ॥१।२।२१॥

व्यञ्जनत्रयस्याव्यवधाने सति पूर्वस्य लोपः स्यात् । निर्+च्छुभइ=निच्छुभइ[13] । पुच्छ्+ठो=पुट्ठो[14] ॥

---

१ उच्छ्वसन्ति । २ दुःसह । ३ निर्णयति । ४ विश्राम्यति । ५ आश्वासि ६ प्राप्तम् । ७ सप्राप्तम् । ८ भार्यता । ९ सत्कार । १० उत्कर्ष । ११ निश्चरति । १२ ऋद्धि । १३ निक्षिपति । १४ पृष्ट ।

### अपूर्वस्य सयुक्तस्य ।१।२।२३॥

संयुक्ते पूर्वस्य लोप स्यात्सयुक्तमपूर्वं चेत् । कमइ[1] । किणेइ[2] । अपूर्वेति किम् । विक्कमइ[3] । विक्केइ[4] ॥

### समश्च ॥१।२।२२॥

समः परस्य र युक्तस्यादे लोप. स्यात् । सम्+क्कमइ= सकमइ[5] । सम्+क्कमणे=सक्कमणे[6] ॥

### निर क्कमस्य ॥१।२।२५॥

निरः परस्य क्कमधातोरादेर्लोप. स्यात् ।

### कमचिणतरपज्जाना द्वितीय ॥१।२।२७॥

निरः परेप मेषामादेर्द्वितीयवर्णआदेश' स्यात् । निर्+ क्कमइ=निक्खमइ[7] । निर्+क्कमणं=निक्खमणं[8] । निर्+चओ निच्छुओ[9] । निर+तरइ=नित्थरइ[10] । णिर्+पज्जइ=णिप्फज्जइ[11] "बाहुलकात्" णिप्पज्जइ ।

### दो हो ध ॥१।४।१॥

दकारात्परस्य हकारस्य धकारः स्यात् । उद्+हरो= उद्धरो[12] ॥

---

१ क्रामति । २ क्रीणाति । ३ विक्रमते । ४ विक्रीणीध्वे । ५ सक्रामति । ६ सक्रमणे । । ७ निष्क्रामति । ८ निष्क्रमणम् ९ निश्चय १० निस्तरति । ११ निष्पद्यते । १२ उद्धर ।

### उद: सश्छः ॥१।४।५॥

उद: परस्य सकारस्य छकारो वा स्यात् । उद्+साहो=उच्छाहो[1] । उद्+सयो=उच्छयो[2] । पक्षे परसवर्णे उस्साहो, उस्सयो ॥

### मोऽनुस्वारोऽवसानव्यञ्जनयोः ॥१।४।२॥

अवसाने व्यञ्जने च परे मकारस्यानुस्वारः स्यात् । निओइउ । सम्+सरइ=संसरइ[3] ॥

### स्वरे वा ॥१।४।३॥

मकारस्य स्वरे परेऽनुस्वारो वा स्यात् ।

"उसभमजिअं च वन्दे"[4] "कुंथुं अरं च मल्लिं"

### तस्य सवर्गीयपञ्चम स्पर्शेषु ॥१।४।४॥

कादिमान्ताः स्पर्शास्तेषु परेष्वनुस्वारस्य परवर्णवर्गस्थितः पञ्चमो वर्ण आदेशो वा स्यात् । सम्+चरइ=सञ्चरइ[5], संचरइ । सम्+पावेइ=सम्पावेइ[6], संपावेइ ॥

### णम्यनुस्वारस्य ॥४।४।८९॥

णमि परेऽनुस्वारस्य लोपो वा स्यात् । अहं+णं=अहणं । पक्षे परसवर्णे अहण्णं । तेसिं+णं=तेसिणं[7], तेसिण्णं ॥

॥ इति व्यञ्जनसन्धिप्रकरणम् ॥



---

१ उत्साह । २ उद्+शय । ३ संसरति । ४ "ऋषभमजितञ्च वन्दे" ५ संचरति । ६ संप्राप्नोति । ७ तेषां,णमिति वाक्यालङ्कारे ।

# अथ स्वरविकारप्रकरणम् ॥

इ किवणभुजङ्गयो ॥१।३।२॥

अनयोरपरयाया पूर्वस्वरस्येकारो वा स्यात्। किविणो, किवणो। भुइंगो, भुअगो ॥

खुड्डस्य के दीर्घ ॥१।३।१॥

खुड्डशब्दस्य कप्रत्यये परे दीर्घोऽन्तादेशो वा स्यात्। खुड्डाय, खुड्डाग, खुड्डग, खुड्डय, खुड्डक ॥

चरमे रस्य ॥१।३।३॥

चरमशब्दे रेफस्येकारोऽन्तादेशो वा स्यात्। चरिम चरम ॥

सुरभिदुरभ्यो रस्य ॥४।४।८३॥

एतयोरकारस्य लोपो वा स्यात् ॥ सुर्भि, सुरभि। दुर्भि, दुरभि ॥

नगिणस्यादे स्वरस्य ॥१।३।४॥

नगिणशब्दस्य पूर्वस्वरस्येकारादेशो वा स्यात्। निगिण नगिण।

उपधायाः ॥१।३।६॥

अधिकारोऽयम् ॥

अश्विन्खिल्लादीनाम् ॥१।३।७॥

---

१ कृपण । २ भुजङ्ग ३ क्षुद्रक ४ नग्न ।

ण्पासुपधायाः पूर्वस्वरस्याकारादेशो वा स्यात् । चिक्खिल्लं, चिक्खल्लं । गरुयं, गुरुयं । अगरु, अगुरु ॥

उर्मत्थुलिङ्गस्य ॥१।३।१५॥

अस्येकारस्योकारो वा स्यात् । मत्थुलुंगं, मत्थुलिंगं[2] ॥

विच्छिये चोऽनुस्वारः ॥१।३।१६॥

विच्छियशब्दे चकारस्यानुस्वारादेशो वा स्यात् । विंछिए[3] । पक्षे ।

उसियस्य ॥१।३।१७॥

विच्छियशब्दे इयस्योसादेशो वा स्यात् । विच्छू, विच्छिए ॥

वईत ऊदोतौ ॥१।३।१८॥

वईशब्दस्योकारौकारावन्तादेशौ वा स्तः ॥ वऊ[4], वओ वई ॥

उदूतोरोदुतौ लस्य द्विः कुतूहले ॥१।३।१९॥

कुतूहलशब्दे उकारस्यौकार ऊकारस्य ह्रस्वो लकारस्य द्वित्वं च वा स्युः । कोउहल्लं, कोउहलं, कोऊहल्लं, कोऊहलं, कुऊहलं, कुतूहलं ॥

पुरुसे द्वितीयस्योत इः ॥१।३।२०॥

पुरुसशब्दे द्वितीयोकारस्येकारो वा स्यात् । पुरिसो पुरुसो ॥

---

१ प्रवलकर्दम । २ मातुलिङ्गम् । ३ वृश्चिक । ४ वाक्

ओत्तन्तूलस्य ॥ १।२।८॥

तन्तूलशब्दस्योपधाया: पूर्वस्वरस्योकारो वा स्यात्। तन्तोल तन्तूल ॥

दुकूलस्य द्विर्हस्वश्च ॥ १।२।११॥

अस्योपधाया द्वित्वं तत्पूर्वस्य स्वरस्य ह्रस्वश्च वा स्तः। दुगुल्ल, दुगल, दुकूल ॥

असादिषु संयुक्तस्यादिपूर्वयोर्लोपदीर्घौ ॥१।४।८॥

असादिगणपठितेषु संयुक्तस्यादेर्लोपः पूर्वस्य दीर्घश्च बहुलं स्यात्। आसो, अस्सो। आसत्थो, अस्सत्थो। आभखाण, अब्भक्खाण ॥

एत कारेल्लस्येय ॥ १।४।६॥

कारल्लस्यैकारस्येयादेशो वा स्यात्। कारियल्लं, कारेल्लं, कारिल्लं ॥

वेटालिसिटयोरत् ॥ १।३।१०॥

अनयोरुपधाया: पूर्वस्वरस्याकारो वा स्यात्। वट, वेट। आलिसदो, आलिसिदो ॥

उउवरस्योतो लोप ॥ १।२।५१॥

उउवरशब्दस्योकारस्य लोपो वा स्यात् ॥ उवरो, उउवरो ॥

इति स्वरविकारप्रकरणम् ॥



---

* अम्म, अम्मा, जिभा, मणुस्स, लुस्स, मिस्स, अमानस्स, अन्भक्खाण, आकृतिगणोऽयम् ॥

# अथ व्यञ्जनविकारप्रकरणम् ॥

## अनादेरसंयुक्तस्य को गयौ ॥ १॥ ४ ॥ १० ॥

अनादिभूतस्यासंयुक्तस्य ककारस्य गकारयकारौ पर्यायेण वा स्तः । अग्नि+करणं=अग्गिगरणं[1] । अव+कारो=अवयारो[2] । वि+कसन्तो=विअसन्तो[3] ॥

## नेः कसस्यादेर्घः ॥१।४।१०२॥

नेरुपसर्गात्परस्य कसस्यादेर्घकारो वा स्यात् । नि+कसो =निघसो[4], निकसो ॥

## खेत्तस्य छः १।४।१०३॥

अस्यादेश्छकारादेशो वा स्यात् । छेत्तं[5], खेत्तं॥

## गिम्हस्य घिंसु ॥१।४।१०४॥

अस्य घिंसु इत्यादेशो वा स्यात्। घिंसु[6], गिम्हो ॥

## गचजतदा यः ॥१।४।२०॥

अनादिभूतानामसंयुक्तानामेषां यकारः स्याद्बहुलम् । जयं[7], जग। भइणी[8], भगिनी। भाइल्लगो[9], भागिल्लगो । आउत्त[10], आगुत्त । सोय[11], सोअं, सोच । अइणा, अजिण। गओ,

---

१ अधिकरणम् । २ अपकार । ३ विकसन् । ४ निकष । ५ क्षेत्र । ६ ग्रीष्म । ७ जगत् । ८ भगिनी । ९ भागिक (अंशग्राही) । १० आगुतम् । ११ शौचम् ।

गजो । अवतरण, अवयरण । वियरइ, विनरति । आगई, आगती । उयर, उदर । पयाहिणा, पदाहिणा । कयत्थो, कदत्थो । अाथ, आज । इंदयाल, इदजाल ।

वा० (उडजे यस्य चोपसख्यानम्) । उरंग, उडय उडअं ॥

णिच्चे चयोस्तिय ॥१।४।१०५॥

णिचशब्दे चकारयोस्तियादेशो वा स्यात् । णितिय, णिइय, णिच ॥

गिहस्य गहघरहरा ॥१।४।१०६॥

गिहशब्दस्य गहघरहरा आदेशाः पर्यायेण वा स्यु । गह, घर, हर, गिह ॥

मिलेच्छेच्छस्य क्खु ॥१।४।१५॥

मिलेच्छशब्दे च्छस्य क्खु इत्यादेशो वा स्यात् ।

एतोऽदुताविलयोलोप ॥१।४।१६॥

मिलेच्छशब्दे एकारस्याकारोकारौ इकारलकारयोश्च लोप पर्यायेण स्यु । मिलेक्खू, मिलक्खू, मिलुक्खू मिलेच्छो, मिलिच्छो, मिच्छो, मेच्छो ॥

पज्जाये ज्जायस्य रियाग ॥१।४।१७॥

पज्जायशब्दे ज्जायभागस्य रियागादेशो वा स्यात् । परियागो, परिआगो, पज्जायो ॥

---

१ प्रदक्षिणा । २ कृतार्थ । ३ आजम ४ उटजम् । ५ नित्यम् । ६ म्लेच्छ । ७ पर्याय ।

भेसजस्य हः ॥१।४।१०७॥

अस्योपधाया जकारस्य हकारो वा स्यात् । भेसहं भेसजं ॥

परिवाड्यो डः ॥१।४।१०८॥

परिवाटीशब्दस्योपधायाष्टकारस्य डकारो वा स्यात् । परिवाडी परिवाटी ॥

मत्तिये तयोष्टो ॥१।४।१८॥

मत्तियाशब्दे तकारयोष्टकारौ वा स्तः । मट्टिया, मत्तिया ॥

अहेरत्तस्य ठथौ ॥१।४।१०६॥

अहेरुपसर्गात्परस्यात्तशब्दस्योपधायाष्टकारथकारावादेशौ पर्यायेण वा स्याताम् । अज्झट्ठं, अज्झत्थं ॥

तत्थस्य तहः ॥१।४।१६॥

तत्थशब्दस्य तहादेशो वा स्यात् । तहं, तत्थं ॥

वीभत्थस्य छश्च ॥१।४।११०॥

वीभत्थशब्दस्योपधायाश्छकारादेशो ह्रस्वश्च वा स्यात् । वीभच्छो, विभच्छो, वीभत्थो ॥

बुधादीनां धस्य हः ॥१।४।२१॥

बुधादिगणपठितानां धकारस्य हकारो वा स्यात् । बुहो,

---

१ भेषजम् । २ परिपाटी ३ मृत्तिका । ४ अध्यात्मम् । ५ तथ्यम् । ६ बीभत्सम् ।

वुधो। रुहिर, रुधिर। एहन्तो, ण्धन्तो। खुहा, खुधा। इत्यादि॥

वज्रादीना वस्योस् ॥१।४।१२॥

वज्रादिशब्दाना वस्योसादेशो वा स्यात्। आउज्जो, आवज्जो। आउज्जण आवज्जण॥

धणोर्हक्कस्वकौ ॥४।४।२॥

धणुशब्दस्य हक्कस्वक् इत्येतावागमौ वा स्तः। धणुह धणुक्ख, धणु॥

नो ण सर्वत्र॥१।४।२२॥

धातौ नाम्नि प्रत्यये चादावनादौ च नकारस्य विकल्पेन णकारो णकारस्य नकारश्च विकल्पेन भवत.। णमसइ नमसइ। णिच्चरइ, निच्चरइ। आकण्णइ, आकन्नइ। किरण। किन्न॥

परिहे परयो फलौ ॥१।४।२३॥

परिहाशब्दे पकाररेफयोः फकारलकारौ वा स्त.। फरिहा, फलिहा, पलिहा, परिहा ॥

आतपादीना पस्य व ॥१।४।२४॥

आनपादिगणपठिताना पकारस्य वकारो वा स्यात्। आतवो, आतपो। कवोतो, कवोतो। वाहणा, पाहणा। जूवो, जूपो। दुरूव, दुरूप। अणुवालय, अणुपालय। विवरीय,

१ एधमान। २ आवर्ज, (आतोद्यम्)। ३ आवर्जनम् ४ धनु।
५ नमस्यति। ६ दुःसक यति। ७ आकर्णयति ८ कीर्णम्।
९ परिखा। १० उपानद्।

विपरीत । पत्तिय पत्तिय । इत्यादि ॥

पिपीलिकाया अनादेः ॥१।४।२५॥

पिपीलिकाशब्दे द्वितीयपकारस्य वकारो वा स्यात् । पिवीलिका पिपीलिका ॥

पुडपुरयोरुत्तरपदयोरादेः ॥१।४।२६॥

उत्तरपदभूतयोरेतयोरादेः पकारस्य लोपो वा स्यात् । तालउड, तालपुडं । गोउर, गोपुर ॥

पउमस्य पोम्मः ॥१।४।२७॥

अस्य पोम्मादेशो वा स्यात् । पोम्मं[2], पउम ॥

यजोर्जः ॥१।४।२८॥

यजुशब्दस्यादेर्जकारो वा स्यात् । जजुव्वेदो[3] । यजुवेओ ॥

डरयोर्लो लस्य रः ॥१।४।१११॥

डकाररेफयोर्लकारो लकारस्य च रेफो बहुलं स्यात् । फोटयो, फोलयो । पोक्खर[4] पोक्खल । पालयामि[5] । परिपिल्लइ[6] । वियारेइ ॥

रिओरुउ ॥१।४।२९॥

रिउशब्दस्य उउ इत्यादेशो वा स्यात् । उऊ[8], रिऊ ॥

उओऽडट्दटौ यश्च॥४।४।३॥

---

१ प्रातिक्रम्, प्रतीतम्, पत्तिम् । २ पद्मम् । ३ यजुर्वेदः । ४ पुष्करम् । ५ पालयामि । ६ परिप्रेरयति । ७ विदारयति । ८ ऋतु ।

उउशब्दान्त्यस्य टद्दटावागमो यादेशश्च पर्यायेण स्युः। उट्ठ, उद्द, उओ ॥

जुहिट्ठिले च ॥१।४।२०॥

जुहिट्ठिलशब्देऽपि लस्य द्वित्वं वा स्यात्। जुहिट्ठिल्लो, जुहिट्ठिलो ॥

अलाबुरिब्वोर्लोप ॥१।४।११२॥

एतयोरुपधाया लोपो वा स्यात्। रिबू, रिऊ। अलाबू, अलाऊ ॥

लुक्खादीनां ह ॥१।४।११३॥

लुक्खादिगणपठितानामुपधाया हकारो वा स्यात् "अस्सादित्वात्" लेह, लुक्ख। जीहा, जिब्भा। रिसहो, रिसभो। ककुह, ककुद। गाहा, गाथा ॥

आविले वस्य ॥१।४।३१॥

आविलशब्दे वकारस्य लोपो वा स्यात्। आइल, आविल ॥

जुवललावन्नयोर्वस्य ॥१।४।३२॥

अनयोर्वकारस्य यकारो वा स्यात्। जुयल, जुवल लायन्न, लावन्न ॥

उर्वसभस्य सात ॥१।४।३३॥

१ युधिष्ठिर। २ रिपु। ३ रूक्षम्। ४ जिह्वा। ५ ऋषभ ६ युगलम्। ७ लावण्यम्।

वसभशब्दस्यादेर्वकारस्याकारसहितस्योकारादेशो वा स्यात्। उसहो, वसहो, उसभो, वसभो ॥

परिवारे वरयोर्यलौ ॥१।४।३४॥

परिवारशब्दे वकाररेफयोर्यकारलकारौ वा स्तः। परियालो, परिवारो ॥

दिवसे वसयोर्यहौ ॥१।४।३५॥

दिवसशब्दे वकारसकारयोर्यकारहकारौ वा स्तः। दियह, दियस, दिवह, दिवसं ॥

उसिणपसिणयोः सिणस्य ण्हः ॥१।४।३६॥

अनयोः सिणस्य ण्हादेशो वा स्यात् । उण्ह[1] । पण्हो[2] । उसिण । पसिणो ॥

असिलेसे सस्य द्विरश्चेत ॥१।४।३७॥

असिलेसाशब्दे सकारस्य द्वित्वमिकारस्याकारश्च वा भवतः ॥

इलोर्लोपश्च ॥१।४।३८॥

असिलेसाशब्दे इकारलकारयोर्लोपो वा स्यात् । असिलेसा[3], असलेसा, असिलेसा, असलेसा, अस्सेसा ॥

महरट्ठे हरयोर्व्यत्यय ॥१।४।३९॥

अस्मिन् हकाररेफयोर्व्यत्ययो वा स्यात्। मरहट्ठ मरहट्ठ ॥

---

१ उष्णम् । २ प्रश्न । ३ अश्लेषा ।

सणियमश्चरस्य च्छरो यमो लोप ॥१।४।४०॥

सणियमशब्दात्परस्य चरशब्दस्य च्छर इत्यादेशो यमो लोपश्च वा स्यात्। सणिच्छरो ॥ पक्षे

यस्य चरे ॥१।४।४१॥

सणियमशब्दस्य यस्य लोप स्याच्चरे परे। सणिंचरो, सणिंचारी ॥

इति व्यञ्जनविकारप्रकरणम्॥

# ॥ अथ विभक्तिप्रकरणम् ॥

॥ तत्र पुल्लिँङ्गशब्दा ॥

अधातुप्रत्ययोऽर्थवन्नाम ॥१।१।११॥

धातुभिन्नप्रत्ययभिन्न सार्थकशब्दरूप नामसज्ञ स्यात् ॥

कृत्तद्धितौ च ॥१।१।१२॥

कृत्प्रत्ययान्त तद्धितप्रत्ययान्त च शब्दस्वरूप नामसज्ञ स्यात्॥

उदन्मिदिणेह्मएदतोदिहितोस्साणम्मीसन्न सुप्॥१।१।१३॥

उत् अत्, म् इत, इण इहि, अणत्, अतोत् इहिंतो, स्स अणाम, मि इसु, एते सुप्सज्ञा' स्यु'। "तकार उच्चारणार्थ" तत्र उत् अत् प्रथमा। म् इत् द्वितीया। इणा इहि तृतीया। अणत् चतुर्थी। अतोत् इहिंतो पञ्चमी। स्स अणम् षष्ठी। मि इसु सप्तमी ॥

सुपश्च ॥१।१।१८॥

सुपः प्रथमादिक्रमेण द्वौ द्वावेकवचनबहुवचनसंज्ञौ स्याताम् ॥

एकस्मिन्नेकवचनम् ॥१।१।४४॥

एकत्वविवक्षायामेकवचनं स्यात् ॥

तदन्यस्मिन् बहुवचनम् ॥१।१।२५॥

एकत्वसंख्याभिन्नसंख्याविवक्षायां बहुवचनं स्यात् ॥ "अत्र द्विवचनं नास्त्येव" ॥

चतुर्थ्या न बहुवचनम् ॥१।१।२६॥

चतुर्थ्या बहुवचनं नास्ति ॥

नाम्नः सुप ॥२।१।१॥

नामसंज्ञकाच्छब्दस्वरूपात्सुप्प्रत्ययाः स्युः ॥ अकारान्तः पुल्लिँङ्गो जिणशब्दः ॥

इदुत पुंस्यतः ॥२।१।२॥

अकारान्तपुल्लिँङ्गनाम्नः प्रथमैकवचनस्योकारस्यैकारो वा स्यात्। जिण+उ=जिणो, जिणे। जिण+अ=जिणा ॥ जिण+म्=जिणं। जिण+ए=जिणे ॥

इणेहोरनुस्वारो वा ॥४।४।१॥

इणाहिप्रत्यययोरनुस्वारान्तागमो वा स्यात्। जिण+इण=जिणेणं, जिणेण। जिण+हिं=जिणेहिं, जिणेहि ॥ जिण+आए=जिणाए ॥

१ तादर्थ्ये चतुर्थ्येकवचनं क्वचिद्भवति तदन्यत्र तु चतुर्थीस्थाने षष्ठ्येव प्रयुज्यते।

अतोत्यन्त्यस्य ॥२।१।५॥

अकारान्तान्नाम्नः परस्मिन् पञ्चम्येकवचनेऽन्त्यस्वरस्य लोपो वा स्यात् । जिण+अनो=जिणाओ, जिणा ॥

अतोऽस्त्रिया हिस्तोत क्वचित् ॥१।२।१८॥

अकारान्तान्नाम्न. परस्यानोत्प्रत्ययस्य तोत स्थाने हिसा देशः स्यात् क्वचित्पुसि क्लीबे च । जिणाहि । जिण+इर्हितो =जिणेहिंतो ॥ जिण+स्स=जिणस्स, जिण+अणाम् =जिणाण ॥

मेरादे सलोपो॥४।४।११४॥

सप्तम्येकवचनस्य मेरादिवर्णस्य पर्यायेण सकारादेशो लोपश्च वा स्यात् ॥

मो व्यञ्जनादो पूर्वस्य॥४।४।१५॥

व्यञ्जनादौ सप्तम्येकवचने परे पूर्वस्यानुस्वारान्तागम' स्यात् । जिण + मि=जिणसि, जिणमि, जिणे । जिणेसु ॥

आमन्त्रणोतो लोप क्लीवे नित्य पुसि वा लोपोऽतो दीर्घं ॥२।१।३॥

अकारान्तान्नाम्न आमन्त्रणार्थकप्रथमैकवचनस्य क्लीबे नित्य लोप पुसि वा लोप स्यात् तस्मिन्सत्यकारस्य दीर्घश्च । भो जिणा, भो जिणो, भो जिणे, भो जिण । एव गोयम देवमणुस्सप्रभृतय. ॥

न्तमन्तयोरीदुतोन्तस्य ॥२।१।६॥

न्तमन्तयोन्तस्य लोपो वा स्यादीप्रत्यये उत्प्रत्यये परे ॥

लोपेऽनुस्वार उतः ॥२।१।७॥

न्तस्य लोपे सति प्रथमैकवचनस्यानुस्वारादेशः स्यात् । भगवन्त + उ=भगवं, भगवन्तो । मतिमं, मतिमन्तो । कारयं, कारयन्तो ॥

न्तमन्ताभ्यामु ॥२।१।१३॥

एतदन्ताभ्यां परयोः प्रथमाद्वितीयाबहुवचनयोरुकारादेशः स्यात् । भगवन्तो । मतिमन्तो । कारयन्तो ॥

इणस्सयोर्डासूडोसौ नलोपश्च ॥२।१।१४॥

न्तमन्तान्तशब्दात्परयोरिणस्सयोर्टासूडोसू इत्येतौ क्रमेणादेशौ स्तो नकारस्य लोपश्च । भगवया, भगवता । भगवओ, भगवतो ॥ शेषं जिणशब्दवत् ॥

सेदणमो भवन्तस्य भे ॥२।१।१५॥

इदु अणप्रत्ययसहितस्य भवन्तशब्दस्य भे इत्यादेशो वा स्यात् । भे, भवन्ते, भवन्ताण ॥

तारादो ॥२।१।१६॥

तारप्रत्ययान्तात्परयोः प्रथमाद्वितीयाबहुवचनयोरोकारादेशः स्यात् । पसत्थारे । पसत्थारो ॥ कत्तारे । कत्तारो ॥ भत्तारे । भत्तारो ॥

## तारस्य तुस्तृतीयादौ वा ॥२।१।१७॥

तारप्रत्ययस्य तु इत्यादेशो वा स्यात्तृतीयादिषु परेषु । पसत्तुणा । कत्तुणा । भत्तुणा । पक्षे पसत्थारेण । कत्तारेण । भत्तारेण ॥

## ताराद्वा डो लोपश्चारस्य ॥१।२।३२॥

तारप्रत्ययान्तात्परस्यामन्त्रणोनो डादेश आरस्य लोपश्च वा । हे कत्त । हे भत्त । हे दाय । पक्षे जियायन् ॥

## रायादिभ्य आत् ॥२।१।८॥

एभ्यः परस्य प्रथमाया एकवचनस्याकारादेशः स्यात् । राया । वा० ( आमन्त्रणे डस्वरूपं च ) हे राय ॥

## मोऽणड् वा ॥२।१।९॥

एभ्यः परस्य मप्रत्ययस्याणडागमो वा स्यात् । रायाण, राय ॥

## अदितोरणो ॥२।१।१०॥

रायादिभ्यः परयो प्रथमाद्वितीययोर्बहुवचनयोरणो इत्यादेशः स्यात् । रायाणो ॥

## राये सेणस्य यस्य ज्ञा ॥२।१।११॥

रायशब्दस्येणप्रत्ययमहितस्य यस्य ज्ञा इत्यादेशः स्यात् । रन्ना ॥

१ इदुद्यादिभ्यस्य आ ॥ २ । १ । १८ ॥ इति ...

## सस्सस्य ञो ॥२।१।१९॥

रायशब्दस्य स्सप्रत्ययसहितस्य यस्य ञो इत्यादेशः स्यात्। रञो ॥

## रायस्याणमिह्योरिर्यस्य ॥२।१।१८॥

रायशब्दस्य यस्येकारादेशः स्यादणमिह्मिप्रत्यययोः। राईहिं। राईण ॥ शेष जिणवत् ॥ अत्त+उ =अत्ता। अप्पा। अरहा। अत्ताण। अप्पाण। मुद्धाण ॥

## अत्ताप्पाभ्या च ॥२।१।२०॥

आभ्या परस्येणप्रत्ययस्य णा इत्यादेशः स्यात्।अत्तणा। अप्पणा ॥

## स्सस्य णोः ॥२।१।२१॥

आभ्यां परस्य स्सप्रत्ययस्य णो इत्यादेशः स्यात्। अत्तणो। अप्पणो ॥ शेष जिणवत् ॥

## सुद् चेणस्य ॥२।१।२३॥

जसादिभ्यः परस्येणप्रत्ययस्य डासादेशः सुडागमश्च स्यात्। जस+इण=जससा। मणसा। वयसा। कायसा। तेयसा। चक्खुसा। जोगसा ॥

## जसादिभ्य. सो ॥२।१।२२॥

जसादिभ्यः परस्य स्सप्रत्ययस्य सो इत्यादेशो वा स्यात्। जससो, जसस्स। मणसो, मणस्स ॥

तारस्य त्तुस्तृतीयादौ वा ॥२।१।७॥

तारप्रत्ययस्य त्तु इत्यादेशो वा स्यात्तृतीयादिषु परेषु । पसत्थुणा । कत्तुणा । भत्तुणा । पक्षे पसत्थारेण । कत्तारेण । भत्तारेण ॥

ताराद्वा डो लोपश्चारस्य ॥१।७।२२॥

तारप्रत्ययान्तात्परस्यामन्त्रणोनो डादेश आरस्य लोपश्च वा । हे कत्त । हे भत्त । हे दाय । पक्षे जिणायत् ॥

रायादिभ्य आत् ॥२।१।८॥

एभ्यः परस्य प्रथमाया एकवचनस्याकारादेशः स्यात् । राया । वा० ( आमन्त्रणे ङस्वत्व्य ) हे राय ॥

मोऽणड् वा ॥२।१।९॥

एभ्य परस्य मप्रत्ययस्याणडागमो वा स्यात् । रायाण, राय ॥

अदितोरणो ॥२।१।१०॥

रायादिभ्य. परयो प्रथमाद्वितीययोर्बहुवचनयोरणो इत्यादेशः स्यात् । रायाणो ॥

राये सेणस्य यस्य न्ना ॥२।१।११॥

रायशब्दस्येणप्रत्ययमस्तितस्य यस्य न्ना इत्यादेशः स्यात् । रन्ना ॥

---

१ इदुद्भ्यामिणस्य वा ॥ २ । १ । १६ ॥ इति इणस्य वादेश ।

सस्तस्य ञ्चो ॥२।१।१२॥

रायशब्दस्य स्सप्रत्ययसहितस्य यस्य ञ्चो इत्यादेशः स्यात्। रञ्चो ॥

रायस्याणमिह्योरिर्यस्य ॥२।१।१८॥

रायशब्दस्य यस्येकारादेशः स्यादणमिहिप्रत्यययोः। राईहिं। राईण ॥ शेष जिणवत् ॥ अत्त+उ अत्ता। अप्पा। अरहा। अत्ताण। अप्पाण। मुद्धाण ॥

अत्ताप्पाभ्या च ॥२।१।२०॥

आभ्या परस्येणप्रत्ययस्य णा इत्यादेशः स्यात्। अत्तणा। अप्पणा ॥

स्सस्य णो ॥२।१।२१॥

आभ्यां परस्य स्सप्रत्ययस्य णो इत्यादेशः स्यात्। अत्तणो। अप्पणो ॥ शेष जिणवत् ॥

सुट् चेणस्य ॥२।१।२३॥

जसादिभ्यः परस्येणप्रत्ययस्य टामादेशः सुडागमश्च स्यात्। जस+इण=जससा। मणसा। वयसा। कायसा। तेयसा। चक्खुसा। जोगसा ॥

जसादिभ्य सो ॥२।१।२२॥

जसादिभ्यः परस्य स्सप्रत्ययस्य स्मो इत्यादेशो वा स्यात्। जसस्मो, जसस्स। मणसो, मणस्स ॥

मणस्य वा ॥४।४।६॥

व्यञ्जनादौ भस्सप्येकवचने परे मणशब्दस्यानुस्वारान्तागमो वा स्यात् । मणसि, मणंसि, मणम्मि ॥ शेष जिणवत् ॥

कम्मधम्मयोरुरिणे ॥२।१।२४॥

कम्मधम्मशब्दयोरकारान्तादेश' स्यादिणप्रत्यये परे । कम्म+इण=कम्मुणा । धम्म+इण=धम्मुणा । शेष जिणवत् ॥

## ॥ इकारान्तः पुल्लिङ्गो मुणिशब्दः ॥

आदिदुद्भ्य स्वरे सुपि पूर्वसवर्णं ॥१।२।१४॥

आकारादिकारादुकाराच्च स्वरादौ सुपि परे पूर्वपरयोः पूर्वसवर्णदीर्घ एकादेशः स्यात् । मुणि+उ=मुणी।

अदितोणों वा ॥२।१।२५॥

इदुद्भ्यां परयो प्रथमाद्वितीयाबहुवचनयोर्णो इत्यादेशो वा स्यात् पुंसि । मुणि+अ=मुणिणो, मुणी ॥ मुणि+म्= मुणिं । मुणि+इ=मुणिणो, मुणी ॥

इदुद्भ्यामिणस्य णा ॥ २।१।१९॥

इदुद्भ्या परस्येणप्रत्ययस्य णा इत्यादेशः स्यादस्त्रियाम् । मुणि +इण=मुणिणा । मुणि+इहि=मुणीहिं, मुणीहि ॥

अएत स्सणावावास्त्रियाम् ॥२।१।२६॥

इदुद्भ्या परस्याण्त स्स णो इत्यादेशौ पर्यायेण स्तोऽस्त्रियाम् । मुणि+अण=मुणिणो, मुणिस्स ।

क्वचिदास्सः ॥२।१।२८॥

अकारात्परस्याप्यणतः स्स इत्यादेशः स्यात् क्वचित्। "जेस्सट्टाए" (यस्मै अर्थायेत्यर्थः)॥

अतोऽस्सयोर्णोत् ॥२।१।२७॥

इदुद्भ्यां परयोः पञ्चमीषष्ठ्येकवचनयोर्णो इत्यादेशो वा स्यात्। मुणि+अतो=मुणिणो, मुणीओ। मुणि+इन्तो =मुणीहिन्तो॥ मुणि+स्स=मुणिणो, मुणिस्स, मुणि+अण =मुणीण॥ मुणि+मि=मुणिंसि,मुणिंमि,मुणी। मुणीसु॥

युभ्यां च ॥२।१।४॥

इकारोकाराभ्या परस्यामन्त्रणैकवचनस्य लोपो वा स्यात्। भो मुणि! मुणी! भो मुणी! मुणिणो! ॥ "भो सक्का देविंदा देवराया दाहिणड्ढलोगाहिवइ"[1] एव तवस्सिगिरिजलहिप्रभृतयः॥

## ॥ उकारान्तः पुल्लिँङ्गः साहुशब्दः ॥

साहु+उ=साहू।

अतोऽवोडुत. ॥२।१।२६॥

उदन्तात्परस्य प्रथमाबहुवचनस्यातोऽवोडादेशो वा स्यात्। "डित्याद्दिलोपः" साहु+अ = साहवो, साहुणो,

[1] भग० ८-३३।२ भो. शक्र! देवेन्द्र! देवराज! दक्षिणार्धाधिपते! भग०३-१ ॥

साहू ॥ साहू । साहुणो,साहू ॥ साहुणा । साहूहिं, साहूहि ॥ साहुणो,साहुस्स ॥ साहूओ,साहुणो । साहूहिंतो ॥ साहुणो, साहुस्स । साहूण ॥ साहुसि, साहुम्मि, साहू । साहूसु ॥ भो साहू ! साहवो ! साहुणो ! साहू ! ॥ एवं सव्वन्नु-भाणु-प्रभृतयः ॥

## बहोरवेरत ॥२।१।३०॥

बहुशब्दस्यान्त्यादेशः प्रथमाबहुवचनस्यैकारादेशश्च । बहू । बहवे ॥

## पितृप्रभृतीनामोरुत्यात् ॥१।२।१५॥

पितृप्रभृतिशब्दसम्बन्धिन ऋकारादुत्प्रत्यये पूर्वपरयोराकार एकादेशः स्यात् । पिता, पिया ॥

## अत्यरो ॥१।२।१६॥

ऋकोकारादप्रत्यये परे पूर्वपरयोररो इत्यादेशः स्यात् । पितरो, पियरो ॥

## अरोऽमि ॥१।२।१७॥

ऋकोकारस्यार इत्यादेशः स्यान्मप्रत्यये । पितरं, पियरं ।

## ससस्य वा ॥१।२।१८॥

उक्ताकारात्परस्य ससप्रत्ययस्यैसादेशो वा स्यात् । पिउस्स, पिउस्स, पिउणो । शेषं साहुवत् ॥ एवं भातृ-नत्तृ-जामातृप्रभृतयः ॥

### उतः पितुप्रभृतिभ्यो डडरमावामन्त्रणे ॥१।२।२१॥

पितुप्रभृतिशब्दात्परस्यामन्त्रणांतो ड डरम् इत्येतावादेशौ पर्यायेण स्त.। हे पिय ! हे पियरम् ! ॥

### डावोरत. ॥२।१।६४॥

गोशब्दात्परस्य प्रथमाबहुवचनस्य डावो इत्यादेशः स्यात्। वा० (डाओवस्य लोपो वा वक्तव्यः) गाओ, गावो। गोहिं ॥

### गोर्डवम् ॥२।१।६३॥

गोशब्दात्परस्याणप्रत्ययस्य डवमित्यादेशः स्यात्। गवं ॥

### सव्वादयः सव्वणामाः ॥२।१।३७॥

सव्वादयः शब्दाः सव्वणामसंज्ञाः स्युः। सव्व + उ = सव्वे, सव्वो ॥

### सव्वणामादत्ये ः ॥२।१।३८॥

अकारान्तसव्वणामशब्दात्प्रथमाबहुवचनेऽति प्रत्यये परे पूर्वपरयोरेकार एकादेशः स्यात्। सव्व + अ = सव्वे ॥ सव्व। सव्वे ॥ सव्वेण, सव्वेण, सव्वेहिं, सव्वेहि ॥ सव्वाए ॥ सव्वाओ, सव्वा। सव्वेहिंतो ॥ सव्वस्स।

### इसिमणमः ॥२।१।४०॥

अकारान्तसव्वणामशब्दात्परस्याणप्रत्ययस्येसिमित्यादेशः स्यात्। सव्व + अणम् = सव्वेसिं ॥ सव्वमि, सव्वमि, सव्वे। सव्वेसु ॥

कजतेभ्योऽतोतो म्हा ॥२।१।४१॥

एभ्यः परस्य पञ्चम्येकवचनस्यातोतो म्हादेशो वा स्यात्। जम्हा। शेष सव्वशब्दवत् ॥

उत्येततयोरक्लीबे सः ॥२।१।४२॥

एततशब्दयोस्तयाया, प्रथमैकवचने परे स इत्यादेशः स्यादक्लीबे ॥

तस्य लोपो वा ॥२।१।४३॥

एतनशब्दस्यान्तिम प्रथमैकवचनस्य लोपो वा स्यात्। से, सो, स। ते॥ तम्हा ॥

तस्य ससस्य सेर्वा ॥२।१।४४॥

तशब्दस्य ससन्तिस्य से इत्यादेशो वा स्यात्। से तस्येत्यर्थः॥ के, को। के॥ क। के॥ केण, केण। केहिं, केहि॥ काए॥ कम्हा, काओ।

कादिहितो रितो डओ ॥२।१।४५॥

कशब्दात्परस्येहिंतोप्रत्ययस्यादेरिकारस्य डओ इत्यादेशः स्यात्। कओहिंतो॥ कस्स। केसिं॥

इमकाभ्या से स्सि वा ॥२।१।४६॥

आभ्या परस्य सप्तम्येकवचनस्य से स्सि इत्यादेशो वा स्यात्। कस्सि, कम्मि, कमि, के। केसु॥

इमस्स सोतोऽयम् ॥२।१।४७॥

इमशब्दस्योप्रत्ययसहितस्यायमित्यादेशो वा स्यात्। इम + उ = अयम्, इमे,

## मोर्णङ् वा ॥२।१।५१॥

इमसम्बन्धिनो मो इत्यस्य णङागमो वा स्यात्। इणमो, इमो। "जंबू[1] इणमो अण्हयसवरविणिच्छय पवयणस्स निस्सद" इमे ॥

## मस्य णोऽमि ॥२।१।५२॥

इमसम्बन्धिनो मकारस्य णकारादेशो वा स्यात्। इणं, इम। "इणमेवं पुच्छे"[2] ॥ इमे ॥

## इणेऽणः ॥२।१।५३॥

इमशब्दस्याण इत्यादेशो वा स्यात् इणप्रत्यये। अणेण, इमेणं, इमेण। इमेहिं, इमेहिं ॥ इमाए ॥ इमाओ, इमा। इमेहिंतो ॥

## स्सिंस्सयो रो वा ॥२।१।५४॥

इमशब्दस्याकारादेशो वा स्यात् स्सिंस्सयोः परयोः। अस्स, इमस्स। इमेसिं ॥ अस्सि, इमस्सि, इमम्मि। इमेसु ॥ एसो, एसे, एस। एए ॥ एय। एए ॥ एएण, एएणं। एएहिं, एएहि ॥ एयाए ॥ एयाओ, एया, एएहिंतो ॥ एएसिं। एएसु ॥

## अनुस्वारस्येसिमः ॥२।१।३६॥

सव्वणामशब्दात्परस्येसिंप्रत्ययस्यानुस्वारस्य लोपो वा स्यात्। एएसि। जेसि। तेसि। एवमन्नकयरेयरादयः ॥

---

१ जम्बू! इमामाश्रव (अव) सवरविनिश्चय प्रवचनस्य निस्यन्दम्। पण्ह० १-१। २ इममाक्षेप पृष्टवान्। भग० २ १।

अम्हस्य हमहमो सोत ॥२।१।७५॥

उत्प्रत्ययसहितस्याम्हशब्दस्य ह अहमिनि च पर्यायेण निपात्येते । ह, अह ।

सातो वयम् ॥२।१।७६॥

अमप्रत्ययसहितस्याम्हशब्दस्य वयमित्यादेशो वा स्यात् । अम्हे, वय ।

समो मेममममम ॥२।१।७७॥

मप्रत्ययसहितस्याम्हशब्दस्य मे, म, मम, मम, इति च पर्यायेण निपात्यन्ते । मे, म, मम, मम ।

सेतो णो ॥२।१।७८॥

अम्हशब्दस्य द्वितीयाबहुवचनान्तस्य णो इत्यादेशो वा स्यात् । णो, अम्हे ॥

सेणस्य मएमयो ॥२।१।७९॥

इणप्रत्ययसहितस्याम्हशब्दस्य मए मया इति च पर्यायेण निपात्येते । मया, मए । अम्हेहिं ॥

सातोतो ममाओममाहिंतावो ॥२।१।८०॥

पञ्चम्येकवचनसहितस्याम्हशब्दस्य ममाओ ममाहिंतो इति च निपात्येते । ममाओ, ममाहिंतो । अम्हेहिंतो ॥

## स्स्सस्य ममममञ्झमज्झाऽच ॥२।१।८१॥

स्सप्रत्ययसहितस्याम्हशब्दस्य मम मज्झ मज्झाश्च-कारान्मे मम इति पर्यायेण निपात्यन्ते । मम, मम, मज्झ, मज्झ, मह, मे ।

## मौ मम ॥२।१।८२॥

मिप्रत्यये परे अम्हशब्दस्य ममेत्यादेशः स्यात् । ममंसि ।

## अणमोऽणो लोप ॥२।१।८३॥

अम्हशब्दात्परस्याणप्रत्ययस्याणो लोपो वा स्यात् । अम्ह,

## साणमोणेऽस्साकमो ॥२।१।८४॥

पष्ठीबहुवचनसहितस्याम्हशब्दस्य णे अस्साकमिति च वा निपात्येते । णे, अस्साक, अम्हाण ॥ "एए णे पेयभवे"

## मम्हिं वा सस्ते ॥२।१।८५॥

सिप्रत्ययसहितस्याम्हशब्दस्य मम्हि इति वा निपात्यते । मम्हि, अम्हेसु ।

---

१ एतन्माक प्रत्यभवे ॥ औप० २७ ॥ २ "त मह ण भवतु देवाणुप्पियाण मम्हिं जम्म अणुप्पमाणाण चक्किहे जाव विहरामि" भग० ॥३—१॥

(तदह भवतु देवानुप्रियाणां मयि यस्य नुप्रभावेणाधिष्टते यावद्विहरामि)

## तुम्हशब्दः ॥

### सोतस्तुम्हस्य ततुमेतुमम ॥२।१।८६॥

उप्रत्ययसहितस्य तुम्हशब्दस्य त तुमे तुममिति च पर्यायेण निपात्यन्ते । त, तुम, तुमे ॥

### बहुवचनेषु तुब्भतुज्झो ॥२।१।८७॥

तुम्हशब्दस्य बहुवचनेषु परेषु तुब्भ तुज्झ इत्येतावादेशौ पर्यायेण वा स्त । तुब्भे, तुज्झे, तुम्हे ॥

### मिमो च हो लोप ॥२।१।८८॥

भिप्रत्यये मप्रत्यये च परे तुम्हशब्दस्य हकारस्य लोपः स्यात् । तुम, तुमे ॥

### सेणस्य तुमे ॥२।१।८९॥

इणप्रत्ययसहितस्य तुम्हशब्दस्य तुमे इति निपात्यते । तुमे । तुब्भेहिं, तुज्झेहिं, तुम्हेहिं ॥

### सातोतस्तुमाहितो ॥२।१।९०॥

अतोप्रत्ययसहितस्य तुम्हशब्दस्य तुमाहितो इति निपात्यते । तुमाहितो । तुब्भेहिंतो ॥

### सस्सस्य तेतवतुज्झतुमतुहतुज्झा ॥२।१।९१॥

स्सप्रत्ययसहितस्य तुम्हशब्दस्यैते पर्यायेण निपात्यन्ते । ते, तव, तुज्झ, तुम, तुह, तुज्झ ॥

## अणमोऽम ॥२।१।९२॥

तुम्हशब्दसम्बन्धिनो मकाररहितस्याणप्रत्ययस्य लोपो वा स्यात् । तुब्भ, तुम्ह, तुम्हाण ॥ तुमसि । तुब्भेसु, तुम्हेसु ॥

॥ इति स्वरान्ताः पुल्लिङ्गाः ॥

# अथ स्वरान्ताः स्त्रीलिङ्गाः ॥

तत्राकारान्तः स्त्रीलिङ्गो मालाशब्दः ॥ माला+उ=मोला

## आतश्चादितोरोक् ॥२।१।३२॥

आदिद्भ्यः परयोः प्रथमाद्वितीयाबहुवचनयोरोगागमो वा स्यात् स्त्रियाम् । मालाओ, माला ॥

## आदीदूतां ह्रस्वो मि ॥२।१।३३॥

मि परे आकारेकारोकाराणां ह्रस्वः स्यात् माला+म्=मालं । मालाओ, माला ॥

## णस्य स्त्रियामे. ॥२।१।३१॥

इणप्रत्ययसम्बन्धिनो णकारस्य स्त्रियामेकारादेशः स्यात् । मालाए । मालाहिं ॥ मालाए ॥ मालाओ । मालाहिन्तो ॥

---

१ " आदिद्भ्य " इत्यादिना पूर्वपरयोः पूर्वसवर्णदीर्घैकादेश ।

## ङसस्याए ॥२।१।३४॥

स्त्रीप्रत्ययस्य स्त्रियामए इत्यादेशः स्यात्। मालाए। मालाण॥

## ङेरादीदूतश्च ॥२।१।३५॥

आकारादीकारादूकाराच्च परस्य सप्तम्या एकवचनस्याप्याए इत्यादेशः स्यात्। मालाए। मालासु॥

## आतो ङे रीदूतश्चा डिदू वाऽऽमन्त्रणे ॥२।१।३६॥

आमन्त्रणैकवचनस्याकारात्परस्य डे ईकारादूकाराच्च परस्य क्रमेण डि डु इत्येतावादेशौ वा स्तः। भो माले! माला! भो नइ! भो वहु! ॥

## इकारान्तः स्त्रीलिङ्गो दिट्ठिशब्दः॥

दिट्ठी। दिट्ठीओ, दिट्ठी॥ दिट्ठिं। दिट्ठीओ, दिट्ठी॥ दिट्ठीए। दिट्ठीहिं॥ दिट्ठीए॥ दिट्ठीओ। दिट्ठीहिन्तो॥ दिट्ठीए। दिट्ठीण॥ दिट्ठिंसि। दिट्ठीसु॥ भो दिट्ठी!। दिट्ठीओ!॥

## ईकारान्तः स्त्रीलिङ्गः समणीशब्दः॥

समणी। समणीओ, समणी॥ समणिं। समणीओ, समणी॥ समणीए। समणीहिं॥ समणीए॥ समणीओ। समणीहिन्तो॥ समणीए। समणीण॥ समणीए। समणीसु॥ भो समणि!। समणीओ!॥

## उकारान्तः स्त्रीलिङ्गो धेणुशब्दः॥

धेणू। धेणूओ, धेणू॥ धेणुं। धेणूओ, धेणू॥ धेणूए।

धेणूहिं ॥ धेणूण ॥ धेणूओ । धेणूहिन्तो ॥ धेणूए । धेणूण । धेणूए । धेणूसु ॥ भो धेणू! । धेणूओ! ॥

## ऊकारान्तः स्त्रीलिङ्गो वहूशब्दः ॥

वहू । वहूओ, वहू ॥ वहू । वहूओ, वहू ॥ वहूए । वहूहिं ॥ वहूए ॥ वहूओ । वहूहिन्तो ॥ वहूए । वहूण ॥ वहूए । वहूसु ॥ भो वहू! । वहूओ! ॥

सव्वशब्दस्य स्त्रीत्वे वाच्ये–सव्वा । सव्वाओ, सव्वा ॥ सव्व । सव्वाओ, सव्वा ॥ सव्वाए । सव्वाहिं ॥ सव्वाए ॥ सव्वाओ । सव्वाहिन्तो ॥ सव्वाए।

### आतस्सिम् सव्वणामात् ॥२।१।५५॥

आकारान्तात्सव्वणामशब्दात्परस्याणम स्सिमादेशः स्यात् । सव्वा+अणम्=सव्वासि॥ सव्वाए। सव्वासु ॥ जा । जाओ ॥ ज । जाओ ॥

### जातयोरीवेण ॥२।१।५६॥

अनयोराकारादिणमस्मन्निमीकारे परे पूर्वपरयोरीकार ए-कादेशो वा स्यात् । जीए, जाए । जाहिं ॥

### अएस्ससीनामिमाकाजाताभ्यो डीसे ॥२।१।५७॥

इमकाजाताशब्देभ्यः परेषा षष्ठीचतुर्थीसप्तम्येकवचनानां डीसे इत्यादेशो वा स्यात् ॥ जीसे जाए ॥ जीसे, जाए । जासि ॥ जीसे, जाए । जासु ॥ एव कानाशब्दाः ॥

स्त्रियामियम् २।१।४८॥

इमशब्दस्येत्प्रत्ययसहितस्य स्त्रियामियमिति वा निपात्यते। इयं, इमा॥

ङेश्चेमादहितो ॥२।१।५८॥

स्त्रियामिमशब्दात्परयोरहितोङे | आदेश स्याच्चरारादेशागमो वा स्यात्। इमे, इमाओ, इमा॥

स्सस्य डीए ॥२।१।५६॥

स्त्रियामिमशब्दात्परस्य स्सप्रत्ययस्य डीए इत्यादेशो वा स्यात्। इमीसे, इमीए, इमाए। इमासिं॥ वा० (इमात्सेर्डीसाए क्वचिद्वक्तव्य) इमीसाए। शेष जाशब्दवत्॥ एतामशब्दस्योपधाया सकारादेशे, एमा, एयाओ एया॥ शेष सव्वावत्॥

॥ इति स्वरान्ता स्त्रीलिङ्गा॥

## अथ स्वरान्ता नपुंसकलिङ्गाः॥

उत क्लीबान्म ॥२।१।६०॥

नपुंसकात्परस्य प्रथमाया एकवचनस्य मादेश स्यात्। वण+उ=वणं॥ दहि+उ=दहिं॥ महु+उ=महुं॥

जादितोरक्कैकस्य णिती दीर्घश्च प्रकृते ॥२।१।६१॥

क्लीबात्परयो प्रथमाद्वितीयाबहुवचनयो प्रत्येक णि ति इत्येतावादेशौ पर्यायेण स्त. प्रकृतेर्दीर्घान्तादेशश्च॥

## तेरनुस्वारो वा ॥२।१६२॥

आदेशभूतस्य तेरनुस्वारान्तागमो वा स्यात् । वण+अ =वणाणि, वणाइं, वणाइ ॥ दहि+अ=दहीणि, दहीइं, दहीइ ॥ महु+अ=महूणि, महूइं, महूइ ॥ द्वितीयायामपि तथा । सम्बोधने हेवण' । हे दहि' । हे महु' । हे वणाणि। इत्यादि ॥ शेष पुवत् ॥ सव्व । सव्वाणि, सव्वाइं, सव्वाइ ॥ ज । जाणि, जाइं, जाइ ॥ त । ताणि, ताइं, ताइ ॥ क । काणि, काइं, काइ ॥ इम । इमाणि, इमाइं, इमाइ ॥ एग । एगाणि, एगाइं, एगाइ ॥ शेषं पुवत् ॥

॥ इति स्वरान्ता नपुंसकलिङ्गाः ॥

# अथ संख्यावाचकास्त्रिलिङ्गाः ॥

## दोरदितोर्दो ॥२।१६३॥

दुशब्दात्परयोरदित्प्रत्ययोर्दो इत्यादेशः स्यात् । दु+अ =दो। दु+इ=दो ॥

## दुवे दोण्णि कचित् ॥२।१६४॥

दुशब्दात्परयोरदितो' कचित् प्रत्येकं दुवे दोण्णि इत्येतावादेशौ स्तः । दुवे । दोण्णि ॥

## डस्विहोहितवां दुप्रभृतिभ्य. ॥१।३।१८॥

दुप्रभृतिभ्यः सङ्ख्यावाचकेभ्यः परेषामेषामादिस्वरस्य लोपः स्यात् ।

इह्नीहित्तोऽण्णामिसुप्पोत् ॥२।१।६५॥

द्विशब्दस्याकारादेश स्यादिष्टि-इहिंतो अगम् इसु प्रत्ययेषु । दोहि । दोहिंतो ॥

संख्यायाश्चकाराद्‌णमो ण्हम् ॥२।१।७२॥

संख्या रेकशब्दात्परस्यामाम्प्रत्ययस्य ण्हमित्यादेशः स्यात् । दोण्ह । दोसु ॥

तेऽडओ ॥२।१।६६॥

त्रिशब्दात्परयोरदिनोऽडओ इत्यादेशः स्यात् । ति+अ =तओ । ति+इ=तओ ॥

णिणश्च ॥२।१।६७॥

त्रिशब्दात्परयोरदितोण्णि इत्यादेश स्यात् कश्चित् । तिण्णि । तिहि । तिहिंतो । तिण्ह । तिसु ॥

साऽदितश्चत्तारि चतुर ॥२।१।६८॥

अदिनायमस्तिस्य चउशब्दस्य चत्तारि इति निपातने । चउ+अ=चत्तारि । चउ+इ=चत्तारि । चउहि । चउहिंतो । चउण्ह । चउसु ॥

रोश्च ओ ॥२।१।६६॥

चतुशब्दात्परयोरदितो रो इत्यादेश कश्चित् । चउरो ॥

पञ्चादिभ्यो लोप ॥२।१।७०॥

पञ्चादिसंख्यावाचकेभ्य परयोरदितोर्लोपः स्यात् । पञ्च ।

पचर्हि, पचर्हिंतो । पचण्ह । पचसु ॥ एव छशब्दादारभ्याष्टा- रसपर्यन्त बोध्यम् ॥

## संख्यायां तेः ॥२।१।७१॥

संख्यार्थकतिप्रत्ययान्तात्परयोरदितोर्लोपः स्यात् । कति । जति । तति । वीसाद्या नउइपर्यन्ताः शब्दाः संख्यासंख्येयोभयवाचकाः, तत्र संख्येयवाचकत्वे नित्यैकवचनान्ताः संख्यावाचकत्वे वचनत्रयान्ताः ॥

## वीसादीनामानउईनां क्लीवत्वं प्रथमाद्वितीययोः ॥२।१।७३॥

नउइशब्दपर्यन्ताना वीसादिशब्दानां प्रथमाया द्वितीयायां च नपुंसकवद्रूप स्यात् ॥

## नाम्नो नपुसके ह्रस्व ॥२।१।७४॥

नाम्नो ह्रस्वान्तादेशः स्यान्नपुसके । एगूणवीस । एगूणवीसा । चत्तालीस । चत्तालीसा । एगूणतीसाइ वाससहस्साइ । अडयालीसाए समच्छरेहिं ॥

॥ इति संख्यावाचकास्त्रिलिङ्गाः ॥

॥ इति विभक्तिप्रकरणम् ॥



# ॥ अथाव्ययप्रकरणम् ॥

## अव्ययम् ॥१।१।१६॥

अधिकारोऽयम् ॥

सदृशं त्रिषु लिङ्गेषु, सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु, यन्न व्येति तदव्ययम् ॥ १ ॥

## अहादय ॥१।१।२०॥

अहादिगणपठिता, शब्दा अव्ययसञ्ज्ञाः स्यु ॥ अ अण निषेधे । अह आनन्तर्यादौ । अइरा तत्काले । अइव अतीव अधिके । अग आमन्त्रणे । अन्तर् अन्तरेण अभावरति । अते अतो मध्यदेशे । अकम्हा दैवादित्यर्थे । अचिर शीघ्रतायाम् । अजस्स निरन्तर । अज्ज अस्मिन्नहनि । अज्जयाए अद्यप्रभृत्यर्थे । अज्जसुए अद्यश्व इत्यर्थे । अणिस सतते । अति अतिशये । अत्थि अस्तीतितिङन्तप्रतिरूपकमव्ययम् । अदु अदुत्तर आनन्तर्यादा । अदुवा पक्षान्तरे । अधो नीचैरित्यर्थे । अभि आभिमुख्ये । अभिक्खण अभिक्खं पान पुन्ये । अल पर्याप्त्यादौ । अलमत्थु अलमस्त्वित्यर्थे । अवि समुच्चयादा । अविअ पक्षान्तरे । अवियाइ सम्भावनायाम् । अन्नइ अन्नति पान पुन्ये । अहवण अथवार्थे । अहावर

अहे तनःपरमित्यर्थे। अहो नीचदेशे। आ मर्यादाभिविध्यादौ। आइ वाक्यालङ्कारे आउ पक्षान्तरे। आरा समीपे। इ प्राकव्ये। इइ इति इत्ति इय प्रकारे, समासौ च। इव सादृश्ये। ईस ईसि ईसि अल्पत्वे। उण उणो पुनरित्यर्थे। उदाहु उदाहु पक्षान्तरे। उपरि उप्पि उवरि उपर्यर्थे। उस्सण्ण उस्सन्नं प्रायोऽर्थे। उपरि पूर्वप्रकारे। ए सम्बोधने एतत्प्रकारे। एम एमाइ इत्यादौ। एमेव एतत्प्रकारे। एव अवधारणे। एवं पूर्वोक्तरीतौ। एवमहं वाक्यालङ्कारे। कि जिज्ञासायाम्। किंच पक्षान्तरे। किणाइ किञ्चिन्मात्रमित्यर्थे। किण्ण जिज्ञासायाम्। किर किल निश्चये। कीस कस्मादित्यर्थे। कद् कु कुत्सायाम्। खलु निश्चये वाक्यालङ्कारे च। खिप्प शीघ्रतायाम्। च च्च समुच्चयादौ। चिट्ठं चे भृशमित्यर्थे। जइ जति जदि यद्यर्थे। जाउ कदाचिदित्यर्थे। जाव ताव यावत्तावदित्यर्थे। जुगवं एकस्मिन् काले। झत्ति शीघ्रतायाम्। ण निषेधे। ण वाक्यालङ्कारे। णवरं णवरि कैवल्यार्थे। णहु निषेधे। णाइ निषेधे। णाणा अनेकस्मिन्। णिहो नीचदेशे। णु प्रश्ने। णूणं निश्चये। णो निषेधे। णं णह वाक्यालङ्कारे। तं तत्रार्थे। ति त्ति पूर्वोक्तप्रकार समासौ च। तु समुच्चये। थ वाक्या-

लङ्कारे। दिया दिवसे। दूरा दूरदेशे। धणिय अतिशये। धिद्धि धिर धिसि धिक्कारार्थे। न निषेधे। णणु शङ्कायाम्। नमो नमस्कारे। नवर नवरि कैवल्यार्थे। नहु निषेधे। नाणा अनेकस्मिन्। नूण निश्चये। नो नोण निषेधे। दुट्ठु दुष्टे। पए पगे प्रभाते। पच्छा उत्तरत्र। पभिइ पभित्ति प्रारभ्येत्यर्थे। परेव्वं परदिने। पसढ प्रसह्येत्यर्थे। पाए प्रायोऽर्थे। पाओ पातो प्रभाते। पाय प्रायोऽर्थे प्रभाते च। पि अप्यर्थे। पिव इवार्थे। पिह पिहु पिहो पुढो पृथगर्थे। पुण पुणो पुनरित्यर्थे। पुरा पूर्वकाले अग्रे च। पुरत्था पुरच्छा पुरे अग्रे इत्यर्थे। पुला पूर्वकाले। बहि बाह्ये। भंते पूज्यसम्बोधने। भिस अतिशये। भुज्जो भूज्जो बाहुल्ये। भे भो सम्बोधने। मज्झो मध्ये। मणय मणा अल्पे। माह निषेधे। मिव इवार्थे। मिहो परस्परस्मिन्। मुसा असत्ये। मुहा निष्प्रयोजने। मुहु पान.पुन्ये। य चार्थे। युगव एककाले। रह रहो एकान्ते। राओ रात्राविल्यर्थे। रिते विनाऽर्थे। वि अप्यर्थे। विव इवार्थे। विस वीसु पृथक्त्वे। व्व इवार्थे। सइ सकृदर्थे सदार्थे च। सपड सवय एतत्काले। सपाओ प्रभाते। सक्ख प्रत्यक्षज्ञाने। समत समता

सर्वप्रकारेणेत्यर्थे। सणिअं शनैरित्यर्थे। सद्धिं सम सहार्थे। सयं सकृदित्यर्थे स्वयमित्यर्थे वा। सययं सतते। सयराह सत्वरमित्यर्थे। साय सूर्यास्तमनसमये। सुइर दीर्घकाले। सुए अनागतदिने। सुट्ठु सौष्ठवे। सुतर सज्जन इत्यर्थे। सेव्वं तदेवमित्यर्थे। हता स्वीकारे। हंद आश्चर्यार्थे। हंदि हभो आमन्त्रणे, क्रुद्धसंबोधने, विकल्पविषादपश्चात्तापनिश्चयेषु च। हउ इत इत्यर्थे। हणिहणि प्रतिदिनम्। हद्धी खेदे। हव्व शीघ्रतायाम्। हिज्जो अतीतदिवसे। ही आश्चर्ये। हुरत्था बहिर्देशे। हुलियं शीघ्रतायाम्। हे सम्बोधने। हेट्ठ हेट्ठा हेट्ठि हेट्ठिल्ला नीचदेशे। हे हो आमन्त्रणे।

अत्यादयश्च ॥१।१।२१॥

अत्यादिगणपठिता शब्दा अव्ययसंज्ञाः स्युः।
अइ अति अतिशये उत्कर्षे च। अणु अनु पश्चात्सादृश्यलक्षणादिषु। अधि अहि सत्त्वेऽधिकारे च। अभि आभिमुख्यादौ। अव उव ओ निश्चयानादरालम्बनादिषु। आ सीमादौ। आविर् व्यक्ते। उ उद् ऊर्ध्वादौ। उ उप उव ओ ओव समीपादौ। णि नि निषेधादौ। णिर् निर् वियोगे निश्चयादौ च। दु दुष्टभावादौ। दु दूर पीडादौ।

प प्प प्रकर्षादौ। पडि पति व्याप्तिलक्षणप्रातिकूल्यादौ। परा प्राधान्यादौ। परि पलि सर्वत्रेत्यर्थे। पाउ पाउर् प्राकाश्ये। वि नियोगादौ। सद् श्रद्धायाम्। सम् समुच्चयादौ।

## अमादितद्धितान्ता ॥१।१।२२॥

अम् आ आवन्ति इइ उण उण्णा इर ई उ क्खुत्तो चण चि चिय ण्ह ण्हि ण्हु त्ता त्ति त्तो त्थ त्थ दा दाणि धा धा सिं सो स्स स्सिं ह ह हा हिं हिय हुणा इत्येतत्तद्धित-प्रत्ययान्ता शब्दा अव्ययसंज्ञा स्युः। ज यस्मादित्यर्थः। त तस्मादित्यर्थे। ता तत इत्यर्थे। सव्वावन्ति सर्वमित्यर्थे। केइ कश्चित् केचिदित्यर्थे। केणइ केनचिदित्यर्थे। कोइ कश्चिदित्यर्थे। जेण जेण यत्रेत्यर्थे। तेण तेण तत्रेत्यर्थे। किण्णा कथमित्यर्थे। इह अस्मिन्नित्यर्थे। किह कुत्रेत्यर्थे। कयाइ कयाई कदाचिदित्यर्थे। कस्सइ कस्यचिदित्यर्थे। जाए यत इत्यर्थे। ताए तत इत्यर्थे। पगामाए प्रकामत इत्यर्थे। दुक्खुत्तो द्वि कृत्व इत्यर्थे। तिक्खुत्तो त्रि कृत्व इत्यर्थे। इमचण इमचनेत्यर्थे। एकचण एकचनेत्यर्थे। जावचण जावचण यावचनेत्यर्थे। तावचण तावचनेत्यर्थे। काहिंचि कुत्रचिदित्यर्थे। कुहिंचिय कुत्रचिदित्यर्थे। जण्ह यस्मादित्यर्थे। इण्हि इयण्हि

इदानीमित्यर्थः । कयइ कुत्रेत्यर्थः । कता कदेत्यर्थः । सता सर्वदेत्यर्थः । जओ जतो यत इत्यर्थः । एत्थ इत्थ अत्रेत्यर्थः । कत्थ कुत्थ कुत्रेत्यर्थः । जत्थ यत्रेत्यर्थः । तत्थ तत्रेत्यर्थः । इत्थं अमुना प्रकारेणेत्यर्थः । तदा तदेत्यर्थः । सदा सर्वदेत्यर्थः । इदाणिं इयाणिं इदानीमित्यर्थः । तथा तथेत्यर्थः । सया सव्वया सर्वदेत्यर्थः । एक्कसि एकश इत्यर्थः । कमसो क्रमश इत्यर्थः । पायसो प्रायश इत्यर्थः । बहुसो बहुश इत्यर्थः । दवदवस्स द्रुतद्रुतमित्यर्थः । एक्कसिं एकदेत्यर्थः । इह इह अस्मिन्नित्यर्थः । तहा तथेत्यर्थः । कहि कुहिं कुत्रेत्यर्थः । जहिं यत्रेत्यर्थः । तहिं तत्रेत्यर्थः । कहिय कुत्रेत्यर्थः । जहिय यत्रेत्यर्थः । तहिय तत्रेत्यर्थः । अहुणा अधुनेत्यर्थः ।

## हेतुसम्बन्धकृदन्ताश्च ॥१।१।२३॥

हेत्वर्थकत्तणप्रभृतिसम्बन्धार्थकृत्तादिप्रत्ययान्ताश्च अव्ययसंज्ञाः स्युः । गच्छित्तए । गच्छित्ता । अभिगन्तु । गणिउ । घेत्तु । गच्छिउ । पगब्भित्तु । नेऊण । भजिऊण । गमेऊण । पडिविसज्जिय । उस्सक्किया । किच्च । किच्चा । सद्दु । उवागम्म । पकुव्व ॥

## समासेऽमन्ता ॥१।१।२४॥

समासेऽम्प्रत्ययान्ता अव्ययसंज्ञाः स्युः । अहोनिसं ।

इकारान्ता दिस्यादय ॥१।१।२५॥

इकारान्ता दिस्यादिशब्दाश्च समासेऽव्ययसञ्ज्ञा स्यु.। अहो-निसि। दिमोदिसिं। गुम्मागुम्मि॥

अव्ययाच्च ॥४।४।६६॥

अव्ययात्परस्य बहुल सुपो लोप स्यात्।

॥ इत्यव्ययप्रकरणम् ॥



## ॥ अथ स्त्रीप्रत्ययप्रकरणम् ॥

### अत स्त्रिया डा ॥२।२।१॥

अकारान्तात्प्राप्त० स्त्रीत्वे द्योत्ये डाप्रत्यय स्यात्। अम्मा। अयिला। अवोगडा॥

### अधिगरणादिभ्यो डी ॥२।२।२॥

अधिगरणादिगणपठितेभ्योऽकारान्तेभ्योऽपि स्त्रियां डी-प्रत्यय स्यात्। अधिगरणी। अभियोगी। अवचुल्ली॥ वा० (गोर्गात्वे डीति वक्तव्य.) गावी॥

---

१ अग्गिगरण, अभियोग, अवचुल्ल, आराहण, कप्पण, कमढ, करह थाग, गाहावड, गुग्ग, गा, चउब्भ, नत्तु, न्तमन्तप्रत्ययान्ता जातिभिन्नाः ञा , पन्नग्ग, मउ,मह, मामवाचका , वातोल, वीअण, वे-ता, वन्भ, मऊर, मवगम, साहु, सिम्म, मीन, एतऽहिगिगणाग्न ।

## के पूर्वस्य ह्रस्वोऽत इर्वा ॥२।२।९॥

स्वार्थविहितकप्रत्यये परे पूर्वस्य ह्रस्वः स्यादकारश्चेत्पूर्वस्मि-स्येकारो वा स्यात्। मामिया। मट्टिया। मरालिया। मरा लया। अम्मया॥

## अणश्च ॥२।२।३॥

अणप्रत्ययान्ताड्डीप्रत्ययः स्यात। आरवी॥

## इतोऽभावे णी ॥२।२।४॥

भावभिन्नार्थकेप्रत्ययान्ताण्णीप्रत्ययः स्यात्। आसाविणी॥

## इन्दादाणी पुयोगे ॥२।२।६॥

इन्दशब्दात्पुयोगे स्त्रियामाणीप्रत्ययः स्यात्। इन्दाणी॥

## दिसाड्डिश्च ॥२।२।७॥

दिसशब्दाड्डिप्रत्ययश्चकाराड्डाप्रत्ययः पर्यायेण स्तः स्त्रि-याम्। दिसा। दिसि॥

## उतो डीति प्रकृत्या ॥२।२।११॥

उकारान्ताः शब्दा डीप्रत्यये परे प्रकृत्या स्युः। नत्तुई। मउई॥

## महात्ती ॥२।२।८॥

महशब्दात् स्त्रियां तीप्रत्ययः स्यात्। महती॥

### भिक्खुप्रभृतिभ्यश्च ॥११२५॥

एभ्य स्त्रियां णीप्रत्ययः स्यात्। भिक्खुणी। साहुणी। णाहावइणी, णाहावलिणी। गहवइणी ॥

### सिस्समासयोर्णीति सलोपे ॥२।३।१०॥

एतयोरकारस्येकारः स्याणिप्रत्यये सलोपे सति। सीसिणी। पुराणमासिणी। सलोपे किम्। सिस्सणी ॥

इति स्त्रीप्रत्ययप्रकरणम् ॥

## अथ कारकप्रकरणम् ॥

### करणप्रयोजकं कर्त्ता ॥१।१।२६॥

करणनिष्ठव्यापारजनकं कर्तृसंज्ञः स्यात् ॥

### कर्त्तरि प्रथमा ॥२।२।१२॥

कर्त्तरि वाच्ये नाम्नः प्रथमा विभक्तिः स्यात्। "अंजू जनू अप्पाणं भावेमाणे विहरति" ॥

### आमन्त्रणे च ॥२।२।१३॥

आमन्त्रणेऽर्थे प्रथमा स्यात्। भो जिण! भो जिणे! अज्जो! आउस! राय!॥

### क्रियया कर्त्तुरिष्टं कर्म ॥१।१।२७॥

क्रियाजन्यफलाश्रयत्वेन कर्त्तुरिष्टतमविषयं कर्मसंज्ञं स्यात्।

---

१ भिक्खु, गहवइ, णाहवइ, णाहावइ गुरु, घर, नत्तु, साहु, सिस्स, सीस, एते भिक्खुप्रभृतयः ॥

२ आर्यजम्बू ........ आत्मानं भावयन् विहरति। नाया० १–५ ॥

### अनुक्ते ॥२।२।१४॥

इत ऊर्द्धमधिकारोऽयम् ॥

### कर्मणि द्वितीया ॥२।२।१५॥

अनुक्ते कर्मवाचकतिङ्कृदादिसमभिव्याहृते कर्मणि द्वितीया स्यात्। "अप्पाणं भावेमाणे विहरति"[1] "सेणिए राया कोडुंबियपुरिसे सद्दावेति"। अनुक्ते किम्। "मए पाउससिरी विउव्विया"[2]॥

### अभेदान्वयि च ॥१।१।२८॥

मियया सह तादात्म्यसम्बन्धवच्च कर्मसंज्ञं वा स्यात्। "अभिमुंहे पंजलिउडे"[3]। "ससद्दं गच्छइ" "ससद्दं चिट्ठइ"[4]

### समयमार्गयोरभिव्याप्तौ ॥२।२।१६॥

समयवाचकान्मार्गवाचकाच्च नाम्नो निरन्तरसम्बन्धे वाच्ये द्वितीया स्यात्। "संखेज्जाइं जोयणाइं दंडं निसिरइ"[5]। "एगं दिवसमवि ते रायसिरिं पासित्तए"[6]। "तंते णं से वणदवे अड्ढाइज्जाइं रातिंदियाइं तं वणं झामेइ"[7]॥

---

१ आत्मानं भावयन् विहरति, श्रेणिको राजा कौटुम्बिकपुरुषान् शब्दायते। नाया० १–१५॥ २ मया प्रावृट्श्रीर्विकुर्विता। नाया० १–१४। ३ अभिमुखः कृतप्राञ्जलिः। नाया० १–५॥ ४ सशब्दं गच्छति, सशब्दं तिष्ठति। नाया० १–३०॥ ५ संख्येयानि योजनानि दण्डं निसरति (निसारयति)। नाया० १–१४॥ ६ एकं दिवसमपि ते राजश्रियं द्रष्टुम्। नाया० १–२४॥ ७ ततः स वनदवोऽर्धतृतीयानि रात्रिंदिवानि तद्वनं ध्मापयति। नाया० १–२७॥

कर्मयुगविवक्षित चापादानादिभि ॥१।१।२९॥

अपादानादिविशेषैरविवक्षित कर्मणा सह भवद्द्वमपि कर्मसज्ञ स्यात्। "जय चिट्ठेति" "जय आसयति"। "जामेव दिसिं पाउब्भूता"। "ज समय सीयपरिस्सह वेदेति नो त समय उसिणपरिसह वेदेइ"। "सुमिणपाढए विपुल जीवियारिह पीइदाण दलयति"। "ज रयणिं च ण पउमावती दारय पयाया त रयणिं च ण पोट्टिलावि दारिय पयाया"॥

व्यापार त्करणम् ॥१।१।३०॥

धात्वर्थव्यापारस्य जनकत्वे सति तज्जन्यफलजनक करणसज्ञ स्यात्॥

कर्तृकरणयोस्तृतीया ॥२।२।१७॥

अनुक्ते कर्तरि करणे वा वाच्ये तृतीया स्यात्। "भगवया महावीरेण अयमट्ठे पन्नत्ते" "विणएण पज्जुवासमाणे"।

---

१ यत तिष्ठति, यत्रमास्ते आश्रयति वा। नाया० १-१७॥ २ यस्यामेव दिशि प्रादुर्भूता। नाया० १-३७॥ ३ यस्मिन् समये शीतपरिषह वेदयति ना तस्मिन् समये उष्णपरिषह वेदयति। भग० ८-८॥ ४ स्वप्नपाठकाय विपुल जीविताह प्रातिदान ददाति। नाया० १-१३॥ ५ यस्या रजन्या च पद्मावती दारक प्रजाता तस्या रजन्या च पोट्टिलाऽपि दारिका प्रजाता। नाया० १४-६४। ६ भगवता महावीरेणायमर्थ प्रज्ञप्त, विनयेन पर्युपास्यमान। नाया० १-५॥

"रायहंससरिसीए गतीए उवागच्छइ" "तुमे देवाणुप्पिए सुमिणे दिट्ठे" । गिरिं नहेहिं खणह, अयं दन्तेहिं खायह, जायतेय पाएहिं हणह, जे भिक्खुं अवमन्नह" । "महया महया सद्देण उग्घोसेमाणा" । "न भविस्सएवं ण एत्थ कारणेण" ।

## हेत्वर्थयोगे सर्वा प्रायेण ॥२।२।१७॥

हेतुवाचकैः शब्दैर्योगे सर्वा एव विभक्तयो बाहुल्येन प्रयुज्यन्ते । गम्यमानाऽपि क्रिया कारकविभक्तीनां निमित्तम् । "धणेण किं धम्मधुराहिगारे" । किं प्रयोजनमिति शेषः । "अलं बालस्स संगेण" ।

## सहार्थयोगे गुणीभूते ॥२।२।१८॥

सहशब्दार्थकशब्दयोगेऽप्रधाने तृतीया स्यात् । भोच्चा भोगे सह इत्थियाहिं" । "धण पभूय सह इत्थियाहिं" ।

---

१ गजहंससदृश्या गत्या उपागच्छति, त्वया देवानुप्रिये स्वप्नो दृष्टः । नाया० १–१० ॥ २ गिरिं नखै खनथ, अयो दन्तै खादथ, जाततेजसं पादैर्हथ, ये (यूय) भिक्षुमवमन्यध्वम् । उत्त० १२–२६ ॥ ३ महता महता शब्देनोद्घोषयन्त । नाया० २–३६ । ४ तद्भवितव्यमत्र कारणेन । नाया० १–१५ ॥ ५ धनेन किं धर्मधुराधिकारे । उत्त० १४–१७ ॥ ६ अलं बालस्य सङ्गेन । आया० १–१–५–६५ ॥ ७ भुक्त्वा भोगान् सह स्त्रीभि । उत्त० १४–९ ॥ ८ धन प्रभूत सह स्त्रीभि । उत्त० १४–१६ ॥

"जस्सत्थि मच्चुणा सक्खं"¹ । सहेति शेष । "सेणिएणं रन्ना सद्धिं"² । "रायवरकण्णाहिं सद्धिं एगदिवसेण पाणिं गिण्हाविसु"³ ॥

### आधारेऽपि ॥२।२।१६॥

क्वचिदधिकरणेऽपि वाच्ये तृतीया स्यात् । "तेणं कालेणं तेणं समएणं"⁴ । "जेणामेव सेणिए राया तेणामेव"⁵ यस्मिन्नेव तस्मिन्नेवेत्यर्थः "मज्झेणं णयगंभीरे"⁶ । "रायवरकण्णाहिं सद्धिं एगदिवसेण पाणिं गिण्हाविसु" ॥

### गोत्तादिभ्योऽभेदे ॥२।२।२०॥

गोत्तादिशब्देभ्यस्तादात्म्ये वाच्ये तृतीया स्यात् । "कासवगोत्तेणं अज्जजंबू"⁷ । "उट्ठाए उट्ठेति"⁸ । "नामेणं मेहकुमारे"⁹ ॥

### विनादियोगे ॥२।२।२१॥

विनादिशब्दयोगे तृतीया स्यात् । "नाणेण विणा न हुंन्ति चरणगुणा"¹⁰ ॥

---

१ यस्यास्ति मृत्युना (सह) सख्यम् । उत्त० १४-२७॥ २ श्रेणिकेन राज्ञा सार्द्धम् । नाया० १-१३ ॥ ३ राजवरकन्याभिः सार्द्धमेकदिवसे पाणिमग्राह्यताम् । नाया० १-२०॥ ४ तस्मिन् काले तस्मिन् समये । नाया० १-४॥ ५ यस्मिन्नेव श्रेणिको राजा तस्मिन्नेव । नाया० १-६ ॥ ६ मध्ये नयगम्भीरे (मध्येन च गम्भीरे) । नाया० १-६॥ ७ काश्यपगोत्रेणार्यजम्बूः । नाया० १-५ ॥ ८ उत्थायोत्तिष्ठति ॥ नाया० १ ५ ॥ ६ नाम्ना मेघकुमारः । नाया० १-१७॥ १० ज्ञानेन विना न भवन्ति चरणगुणाः । उत्त० २८-३०॥

## प्रकारमुपेताल्लक्षणे ॥२।२।२२॥

कंचित्पदार्थं प्रति विशेषणत्वं प्राप्तात्तन्नो व्यावर्त्येऽर्थे तृतीया स्यात् । "देवत्ताए उववण्णो" । "सीसिणित्ताए द-लयति" ॥

## कर्मान्वयेनेष्टं सम्प्रदानम् ॥१।१।२१॥

क्रियायाः कर्मसम्बन्धवत्त्वेन कर्त्तुरिच्छाविषयीभूत स-म्प्रदानसंज्ञ स्यात् ॥

## सम्प्रदाने चतुर्थी ॥२।२।२३॥

अनुक्ते सम्प्रदाने वाच्ये चतुर्थी स्यात् । "एगमेगाए भारियाए एगमेगं हिरण्णकोडिं दलयति" ॥

## तुमर्थेणाद्यन्तेभ्य ॥२।२।२४॥

भावार्थकणादिप्रत्ययान्तेभ्यस्तुमर्थे वाच्ये चतुर्थी स्यात् । "दुल्लहे सवणयाए" दुर्लभः श्रोतुम् । "पासणयाए" द्रष्टुम् । "अहमेयस्स अट्ठस्स अणरिहे सवणयाए" श्रोतुम् । "पाय वन्दिए पहारेत्थ गमणाए" गन्तुम् ॥

---

१ देवतापगत । नाया० १-३१ ॥ २शिष्यात्वेन ददाति । भग० ६-३३ ॥ ३एकस्यै भार्यायै एकैका हिरण्यकोटिं ददाति । नाया० १-२० ४ अहमेतस्यार्थस्यानर्हं श्रोतुम् । ५पादौ वन्दितु प्रधारितवान् (निर्गलित-वान्-निर्गमितवान्) ॥

## तादर्थ्ये षष्ठी च ॥२।२।२६॥

तादर्थ्ये वाच्ये षष्ठी स्याच्चाच्चतुर्थी। "वायेणाए पुच्छणाए परियट्टणाए धम्माणुजोगचिंताए य उच्चारस्स य पासवणस्स य अइगच्छमाणा य निग्गच्छमाणा य"। "एस मे णित्थारिए समाणे पच्छा पुरा हियाए सुहाए खेमाए णिस्सेसाए आणुगामियत्ताए भविस्सति" ॥

## कर्त्तरि च ॥२।२।२५॥

क्वचित्कर्त्रर्थेऽपि चतुर्थी दृश्यते। "से के णं जाणति अम्मयाओ के पुव्विं गमणाए के पच्छा गमणाए" गमनकर्त्ता ॥

## विभागेऽवधिरपादानम् ॥२।१।२२॥

विभागे योऽवधिः स्थिर. सोऽपादानसञ्ज्ञः स्यात्।

---

१ वाचनायै पृच्छनायै परिवर्तनायै धर्मानुयोगचिन्तायै चोच्चारय च प्रस्रवणाय चातिगच्छन्तश्च निर्गच्छन्तश्च। नाया० १—२६॥ २ एषो (ऽर्थी) मे निस्तारित सन् पश्चात् पुरा हिताय सुखाय क्षेमाय निःश्रेयसायानुगामिकतायै भविष्यति ॥ नाया० १—२६ ॥ ३ अथ को जानात्यम्बतात ! क पूर्व गमनाय (गन्ता) क पश्चाद्गमनाय (गन्ता)। नाया० १—२ ॥

## अपादाने पञ्चमी ॥२।२।२७॥

अनुक्तेऽपादाने वाच्ये पञ्चमी स्यात्। "सयणिज्जाओ उट्ठेति २ त्ता पायपीढाओ पच्चोरुहति"[1]। "गिहेहिन्तो पडिनिक्खमति"[2]। "हत्थाओ हत्थं साहरिज्जमाणे" "अंकाओ अंकं परिभुज्जमाणे"[3] ॥

## मर्यादायामाङि ॥२।२।२८॥

सीमार्थकाकारयोगे पञ्चमी स्यात्। "आसत्तमाओ कुलवंसाओ"[4] ॥

## हेतौ ॥२।२।२९॥

हेतौ वाच्ये पञ्चमी स्यात्। "नोइन्दियगेज्झ अमुत्त-भावा" "अमुत्तभावा वि य होइ निच्चो"[5] ॥

## प्रभृत्यर्थयोगे ॥२।२।३०॥

आरभ्येत्याद्यर्थकशब्दयोगे पञ्चमी स्यात्। "इओ तच्चे अईए भवग्गहणे"[6] ॥

---

१ शयनीयात् उत्तिष्ठति, उत्थाय पादपीठात्प्रत्यवरोहति। नाया० १-६ ॥ २ गृहेभ्यः प्रतिनिष्क्रामति। नाया० १-१२ ॥ ३ हस्ताद्धस्तं संह्रियमाणः अङ्कादङ्कं परिभुज्यमानः। नाया० १-१७ ॥ ४ आसप्तमात् कुलवंशात्। नाया० १-२३ ॥ ५ नोइन्द्रियग्राह्योऽमूर्तभावात्, अमूर्तभावादपि च भवति नित्यः ॥ उत्त० १४-१९ ॥ ६ इतस्तृतीयेऽतीते भवग्रहणे। नाया० १—२७ ॥

## शेषे षष्ठी ॥२।२।३१॥

कर्मादिभिन्ने सम्बन्धसामान्ये वाच्ये षष्ठी स्यात्। "अंतो ण भंते माणुसुत्तरस्स पव्वयस्स"[1]। "तस्स णं सेणियस्स रण्णो धारणी नाम देवी होत्था"[2]। "तस्स कारगारस्स अन्तगमणं"[3]। "जस्स सरस्स"[4]॥

## समुदायादेकस्य पृथक्करणे सप्तमी च ॥२।२।३२॥

जातिगुणक्रियाभिः समुदायादेकस्य पृथक्करणं यतस्तस्मात्सप्तमी चात्षष्ठी स्यात्। "दाणाण सेट्ठं अभयप्पदाणं सच्चेसु वा अणवज्जं वयन्ति"[5]। "एएसिं तीसाए महासुमिणाणं इमे चोद्दस"[6] अत्र तीसादिशब्दानां नित्यैकवचनान्ततया बहुवचनान्तविशेषणमपि, तीसाए इति पदमेकवचनान्तम्॥

## अन्तरायोगे च ॥२।२।३३॥

अन्तराशब्दयोगेऽपि षष्ठी स्यात्। "भासमाणस्स वा वो अंतरा भासं भासिज्जा"[7]॥

## दूरान्तिकार्थैर्द्वितीयासप्तम्यौ च ॥२।२।३४॥

दूरार्थकसमीपार्थकशब्दयोगे द्वितीयासप्तम्यौ भवत-

---

१ अन्तो भगवन्! मानुषोत्तरस्य पर्वतस्य। भग० ८—८॥ २ तस्य श्रेणिकस्य राज्ञो धारणी नाम देवी अभवत्। नाया० १—६॥ ३ तस्य कारागारस्यान्तर्गमनम्। नाया० १—१५॥ ४ यस्य सरस्यम्। नाया० १—१६॥ ५ दानानां श्रेष्ठमभयप्रदानं सत्येषु वाऽनवद्यं वदन्ति। सूय० १—६—२३॥ ६ एतेषां त्रिंशतो महास्वप्नानामिमे चतुर्दश। ७ भाषमाणस्य वा नो अन्तरा भाषां भाषेत॥

श्चात्षष्ठी। "भगवनो महावीरस्स अंतिए"। "तस्सेव मंडलस्स अदूरसामन्ते"। "सेणियस्स रन्नो अन्तियाओ"। "सेणियस्स रन्नो पुरओ"। "नगरस्स मज्झंमज्झेण"। "नगरस्स मज्झंमज्झेण निग्गच्छति"। "नगरे मज्झमज्झेण"॥

## दिगर्थे पञ्चमी च ॥२।२।२५॥

दिग्वाचकशब्दैर्योगे पञ्चमी चात्षष्ठी स्यात्। "मेहस्स कुमारस्स पुव्वदक्खिणेण"। "गंगाए महानदीए दाहिणिल्ले कूले"॥

## कर्त्रादौ कृति कर्मणि ॥२।२।२६॥

कर्तृकर्माद्यर्थककृद्योगे कर्मणि वाच्ये षष्ठी स्यात्। "कायराण ‧ दुरणुचरे" 'वयसियस्स एत्थ किं दुक्करं करणयाए। "अरिहेमयस्स अट्ठस्स अणरिहे"॥ "सेणियस्स रण्णो इट्ठा"। कर्मादिवाचकेभ्योऽपि सम्बन्धमात्रविवक्षायां कृद्योगविरहेऽपि षष्ठी।

---

१ भगवतो महावीरस्यान्तिके। नाया० १–२१ २ तस्यैव मण्डलस्यादूरसामन्ते। नाया० १–२७॥ ३ श्रेणिकस्य राज्ञोऽन्तिकात्। नाया० १–१६॥ ४ श्रेणिकस्य राज्ञः पुरतः। नाया० १–१३॥ ५ नगरस्य मध्ये भूत्वा। नाया० १–१२॥ ६ नगरस्य मध्ये भूत्वा निर्गच्छति। नाया० २–३६॥ ७ नगरस्य मध्ये भूत्वा। नाया० २–५०॥ ८ मेघस्य कुमारस्य पूर्वदक्षिणस्याम्। नाया० १–२४॥ ९ गङ्गाया महानद्या दक्षिणे कूले। नाया० १–२७॥ १० कातराणां दुरनुचरम्, व्यवसितस्यात्र किं दुष्करं करणतायाम्। नाया० १–२३॥ ११ अर्हमेतस्यार्थस्यानर्हे। नाया० १–१५॥ १२ श्रेणिकस्य राज्ञ इष्टा। नाया० १–८॥

भीए जम्मणजम्मरणाणा"। "अम्हे णं देवाणुप्पियाण सिस्सभिक्खं दलयामो"। "अवसेसेसे काए समणाण णिग्गथाण निसट्ठे"। "तया णं मम एयमट्ठे निवेदिज्जासि" ॥

णमोयोगे ॥२।२।३७॥

णमोशब्दयोगे षष्ठी स्यात्। "णमोऽत्थु णं अरिहंताण भगवन्ताण" "नमोऽत्थु णं समणस्स भगवओ महावीरस्स"॥

आश्रयोऽधिकरणम् ॥१।१।२३॥

कर्तृकर्मद्वारा क्रियाया आधारोऽधिकरणसंज्ञः स्यात् ॥

सप्तम्यधिकरणे ॥२।२।३८॥

अनुक्तेऽधिकरणे वाच्ये सप्तमी स्यात्। "भद्दासणंमि निसीयइ" ॥

क्रियालक्षणक्रियायाम् ॥२।२।३९॥

अन्यस्याः क्रियाया लक्षणं यया क्रियया भवति तत्क्रियाश्रयवाचकात्सप्तमी स्यात्। "उट्ठियम्मि सूरे सहस्सरस्सिंमि दिणयरे तेयसा जलते सयणिज्जाओ उट्ठेति"। आश्रयस्यो

१ भीता जन्मजरामरणेभ्य। ज्ञाता० १-२४॥ २ वयं देवानुप्रियेभ्यः शिष्यभिक्षां दद्मः। ज्ञाता० १-२४॥ ३ अवशेषा काय श्रमणेभ्यो निर्ग्रन्थेभ्यो निसृष्टः। ज्ञाता० १-२८॥ ४ तदा ममैतमर्थं निवेदयेः। ज्ञाता० १२॥ ५ नमोऽस्तु अर्हद्भ्यो भगवद्भ्यः, नमोऽस्तु श्रमणाय भगवते महावीराय। ज्ञाता० १-३०॥ ६ भद्रासने निषीदति॥ ७ उत्थिते सूर्ये सहस्ररश्मौ दिनकरे तेजसा ज्वलति (सति) शयनीयादुत्तिष्ठति। ज्ञाता० १-१२॥

पम्लेपिकादिरूपस्य सर्वस्य विवक्षणात्। "मत्थेण अजलिं कट्टु" मस्तकसमीप इत्यर्थः ॥

इति कारकप्रकरणम् ॥

---

# अथाव्ययीभावसमासप्रकरणम् ॥

अनेकन्नामैकार्थे समासः ॥१।१।३४॥

विशिष्टैकार्थवाचकमनेकं प्रातिपदिकं समाससंज्ञं स्यात्॥

पदसामर्थ्ये समासतद्धितौ ॥२।३।१॥

पदयोः पदानां वैकार्थीभावे समासतद्धितप्रत्यया भवन्तः। क्वचिदसामर्थ्येऽपि समासः। "गंगापुलिणवालुआसालिसए" ॥

सुप् सुपा वा ॥२।३।३॥

सुपन्तं सुपन्तेन वा समस्यते ॥

अव्ययीभावः ॥२।३।४॥

अधिकारोऽयम् ॥

विभक्त्यर्थादिष्वव्ययम्॥२।३।६॥

विभक्त्यर्थादिवाचकमव्ययं सुपन्तेन समस्यते सोऽव्ययीभावः ॥

समासे प्रथमानिर्दिष्टं पूर्वम् ॥२।३।२॥

समासशास्त्रे प्रथमानिर्दिष्टं पूर्वं प्रयोज्यम्।

---

१ मस्तकेऽञ्जलिं कृत्वा॥ २ गङ्गापुलिनवालुकासहशके। कल्प० २–३ ॥

अज्झप्पं[1] । अच्चत्थं[2] । बहिट्ठाणं[3] । पाउप्पभाया रयणी[4] ॥

अतिरतिक्रान्ते द्वितीयया ॥२।३।७॥

अतिक्रान्तेऽर्थेऽतिर्द्वितीयान्तेन समस्यते ॥

सुप समासतद्धितयो ॥४।४।६५॥

समासतद्धितावयवस्य सुपो लोप स्यात् ॥

स नपुसकमेक च ॥२।३।५॥

अव्ययीभावसमाससंज्ञकः प्रायेण नपुंसकमेकवचनान्तं च प्रयोज्यम् ॥

अनुपडी वीप्सादिषु ॥२।३।८॥

वीप्सादिष्वर्थेषु अनुपडी द्वितीयान्तेन समस्येते । समय समय त्ति=अणुसमय[5] । अणुगामं[6] । अणुणइया[7] । दुवार दुवार त्ति=पडिदुवार[8], पडिदार । पडिसोय[9] ॥

असादृश्ये यथार्थकानि ॥२।३।९॥

सादृश्यभिन्नेऽर्थे यथार्थका अहादिशब्दा द्वितीयान्तेन समस्यन्ते । अहप्पमाणं[10] । अहाकप्पं[11] । अहातच्चं[12] । अहासं-थडं[13] । जहत्थं[14] । जहिच्छं[15] । जहिच्छा ॥

---

१ अध्यात्मम् । २ अत्यर्थम् । ३ बहिःस्थानम् । ४ प्रादुष्प्रभाता रजनी । ५ अनुसमयम् । ६ अनुग्रामम् । ७ अनुनदिकम् । ८ प्रतिद्वारम् । ९ प्रतिस्रोतः । १० यथाप्रमाणम् । ११ यथाकल्पम् । १२ यथातथ्यम् । १३ यथासंस्तृतम् । १४ यथार्थम् । १५ यथेच्छम् ॥

चचेन जादयः समुच्चये ॥२।३।१०॥

जादिशब्दाश्चशब्देन समुच्चयेऽर्थ समस्यन्ते । जेच्चेव । तच्चेव[2] । जीवच्चेव[3] । अजीवच्चेव[4] ॥

आयावदर्थका मर्यादादौ ॥२।३।११॥

मर्यादाद्यर्थे आशब्दो यावदर्थकाश्चशब्दा द्वितीयान्तेन समस्यन्ते । आपाहिणपयाहिणं[5] । जावतिमं[6] । जावदव्वं[7] । आव-कहियं । आवकहा[9] ॥

आभिमुख्यादावभिः ॥२।३।१२॥

आभिमुख्यादिष्वर्थेषु अभिर्द्वितीयान्तेन समस्यते । अ-भिंन्तरं[10], अब्भतरं ॥

पडेरेक्केन समासे दीर्घः ॥१।३।१६॥

पडिशब्दस्यैक्कशब्देन समासे पूर्वस्वरस्य दीर्घः स्यात् ॥

एर्यः कात्पूर्वः परो वा ॥१।३।२०॥

पडेः परस्यैक्कशब्दस्यैकारस्य यकारो वा स्यात्, स च कात्पूर्वं परो वा प्रयोज्यः । एक्कमेक्कं पडिक्कि=पाडियेक्कं, पाडिक्कय, पाडिएक्कं ॥

प्रभृतिना पञ्चमी ॥२।३।१३॥

पञ्चम्यन्तं प्रभृतिशब्देन सह समस्यते ॥

---

१ यच्चैव । २ सच्चैव । ३ जीवच्चैव । ४ अजीवच्चैव । ५ आप्र-दक्षिणप्रदक्षिणम् । ६ यावदिदम् । ७ यावद्‌द्रव्यम् । ८ यावत्कथितम् । ९ यावत्कथम् । १० आभ्यन्तरम् । ११ प्रत्येकम् ॥

## जादयो व्यञ्जनान्ता ॥१।३।२२॥

समासे उत्तरपदे परे जप्रभृतिशब्दा व्यञ्जनान्ता* प्रयोज्याः। जप्पभिई[1]। तप्पभिई[2]। आउक्कालो[3]। आउक्करण[4]। चउक्कसाया[5]। चउद्दिसिं[6]। छन्नीरणिजा[7]। छद्दतो[8]। तमुक्काए, तमुकाए[9]। पुढविक्काइया[10]। वाउक्काइया[11]। खुप्पिवासा[12] ॥

## उव सामीप्ये षष्ठ्या ॥२।३।१४॥

सामीप्यार्थक उवशब्दः षष्ठयन्तेन समस्यते। अगस्स समीप=उवग्ग[13] ॥

## कुत्साद्युष्टादौ कुद्दु प्रथमया ॥२।३।१५॥

कुत्साद्यर्थकः कुशब्दो दुष्टाद्यर्थको दुशब्दश्च प्रथमान्तेन सह समस्यते। जादिगणपठितत्वेन व्यञ्जनान्तत्वात्, दुद्दंसण[14]। दुद्दिन[15] ॥

## कोरादोतौ ॥१।३।२३॥

कुशब्दस्याकार ओकारश्चान्तादेशो वा स्यादुत्तरपदे।

---

*जद्, तद्, महद्, आउस, चउर्, खुह्, छम्, विहस्, वयास्, वायुस् पुढविस् तमस्, दुर्, निर्, पुनर्, धनुस्, जावत्, तावत्, इत्यादिराकृतिगणोऽयम् ॥

---

१ यत प्रभृति। २ तत प्रभृति। ३ आयुष्काल। ४ आयुष्करणम्। ५ चतुष्कषाया। ६ चतुर्दिक। ७ षड्जीवनिका। ८ षड्दन्त। ९ तमस्काय। १० पृथिवीकायिका। ११ वायुकायिका। १२ क्षुत्पिपासे। १३ उपाङ्गम्। १४ दुर्दर्शनम्। १५ दुर्दिनम् ॥

कापुरिसो, कोपुरिसो, कुपुरिसो। कादंटिमो, कोदंटिमो, कुदंटिमो ॥

निष्क्रान्तादौ पञ्चम्या निः ॥२।३।१६॥

निष्क्रान्ताद्यर्थको निःशब्दः पञ्चम्यन्तेन समस्यते। णीसक्को ॥

निरोऽभ्यवानूदराणाम् ॥१।३।३८॥

निरः परेषामभि-अव-अनु-उदर-शब्दानामादेर्वृद्धिः स्यात्। निरॉभिरामो। निरॉवकसो। णिरॉनुकंपो। णिरोदरो ॥

इत्यव्ययीभावसमासप्रकरणम् ॥

---

# अथ तत्पुरुषसमासप्रकरणम् ॥

तत्पुरुषः ॥२।३।१७॥

अधिकारोऽयम् ॥

भेदक भेद्येन कर्मधारय ॥२।३।१८॥

विशेषणं विशेष्येण समानवचनेन समस्यते स समासः कर्मधारयः। तड्डमय। तद्दिवसो। तम्मत्तो ॥

तत्र पूर्वं पुवत् ॥२।३।१९॥

कर्मधारयसमासे पूर्वपदस्य पुवद्भावः स्यात्। वड्ढकुमारी।

---

१कापुरुष । २कुत्सितदन्तिम । ३निःशङ्क । ४निरभिराम । ५निरवकाङ्क्षा । ६ निरनुकम्प । ७निरुदर । ८तादृश । ९तत्र । १० वृद्धकुमारी ॥

## एतकाभ्यां वतियस्योत्तरपदे ॥४।४।७०॥

आभ्यां परस्य वतियस्य लोपः स्यादुत्तरपदे परे। "तमु-क्काए णं भंते! के महालए [illegible] ?, एमहालये णं गोयमा! तमुक्काये पन्नत्ते"। 'कचित्तियस्य लोपः' केवंच्चिरं केवच्चिरं ॥

## पत्तामोडादिषु परम् ॥२।३।२०॥

एषु पूर्वप्रयोगार्हं परं स्यात्। आमोडाणि पत्ताणि = पत्तामोडाणि। अंजलिउडे। अनोसाच्छिन्न। आईण्णजणमणुस्सा। अद्धभरहे ॥

## द्वितीया पत्तादिभिः ॥२।३।२१॥

पत्तादिप्रकृतिकैः प्रथमान्तैः सह द्वितीयान्तं समस्यते स तत्पुरुषः ॥

## दयादीनां पत्तादौ ॥२।३।२२॥

दयादिशब्दानां पत्तादिशब्दे परे ह्रस्वान्तादेशो बहुलं स्यात्। दयपत्तो ॥

## आसो रुट्टस्य त ॥१।४।११४॥

आसुशब्दात्परस्य रुट्टशब्दस्योपधायास्तकारादेशः स्यात्। आसुरुत्तो ॥

---

१ तमस्कायो भगवन्! कियन्महान् ?, एतावन्महान् गौतम! तमस्काय प्रज्ञप्त। भग० ६-५॥ २ कियच्चिरम्। ३ आमोटितपत्राणि। ४ कृताञ्जलि। ५ अच्छिन्नासिकम्। ६ आकीर्णजनमनुष्या। (जनमनुष्याकीर्णा)। ७ भरतार्धम्। [illegible] ९ आशुरुष्ट ॥

## तृतीयापञ्चमीसप्तम्यश्च ॥२।३।२३॥

तृतीयाद्यन्तं प्रथमान्तेन समस्यते स तत्पुरुषः। विउ-ब्भंगडा। तिण्णाणोवगए। उदउल्लं॥

## खडादीनामुत्तरपदे ॥१।३।२१॥

खण्डादिशब्दानामुत्तरपदे परे दीर्घोऽन्तादेशो बहुलं स्यात्। खंडाभेदो। अड्डादंडो। अप्पाबहुग। अप्पाबहुत्तं। आणापाण। पासामिओ। अंघारूवं। आवीकम्मं॥

## दकस्य द. ॥१।४।४२॥

दकशब्दस्य द इत्यादेशः स्यादुत्तरपदे। दाकलसो। दाकुम्भो।

## एत्पोरस्य कच्चे ॥१।३।३९॥

पोरशब्दस्यैकारान्तादेशः स्यात् कच्चशब्दे परे। पोरे-कच्चं॥

---

१ विद्युत्प्रकटा (प्रकृता) २ विज्ञानोपगत । ३ उदकार्द्रम्। ४ खंडभेद। ५ अर्धदण्ड। ६ अल्पबहुकम्। ७ अल्पबहुत्वम्। ८ आनपान। ९ पाशमृग, पार्श्वमित, पार्श्वमृग। १० अन्धरूपम्। ११ आविष्कर्म। १२ दककलश। १३ दककुम्भ। १४ पौरस्कृत्यम्॥

---

*खण्ड, अड्ड, अप्प, आण, पास, अंध, आविर्, एक्क, सच्च, उच्च सम्म, दक, मह इति खण्डादिराकृतिगणः॥

मणादावस्य मः ॥१।४।११५॥

मणशब्दात्परस्योत्तरपदस्याजशब्दस्योपधाया मकारादेश स्यात्। आचिज्ञइ त्ति=आओ, मणसा आओ=मणोमो ॥[1]

पितुप्रभृतीनामि ॥१।३।४०॥

ण्पान्तुत्तरपदे परे इकारोऽन्तादेशो वा स्यात्। अम्मापिइसमाणे[2]। माउपिइसुजाते[3]। भाइसमाणे[4]। भाइसयं[5] ॥

सहस्तृतीयया ॥२।३।२४॥

सहशब्दस्तृतीयान्तेन सह समस्यते ॥

सहसमानयो स ॥१।४।४३॥

अनयो सकारादेशो बहुलं स्यादुत्तरपदे परे। साहिकरणं[6]। संग्रड[7]। संग्रते[8]। संग्रहो[9]। सहपुत्तो[10]। सहसमुद्दो[11] ॥

णखपदस्य णप्फय सात् ॥१।४।४४॥

सात्परस्य णखपदशब्दस्य णप्फय इत्यादेश स्यात्। सणप्फए[12] ॥

सातपत्तस्य ॥१।३।४१॥

सात्परस्य पत्तसशब्दस्यैकारान्तादेश स्यात्। सैपत्तिस[13] ॥

---

१ मन आप, मनोज्ञ । २ अम्बापितृसमान । ३ मातापितृसुजात । ४ भ्रातृसमान । ५ भ्रातृशतम् । ६ समानाधिकरणम् । ७ साग्रडम् । ८ मात्त । ९ मार्थ । १० सपुत्र । ११ ससमुद्र । १२ सनखपद । १३ सपक्ष ॥

### चतुर्थी तादर्थ्ये ॥२।३।२५॥

तादर्थ्ये विहिता या चतुर्थी तदन्तं प्रथमान्तेन समस्यते अट्ठादंडो[1] ॥

### षष्ठी च शेषे ॥२।३।२६ ॥

कर्मादिकारकभिन्ने सम्बन्धसामान्ये विहिता या षष्ठी तदन्तं प्रथमान्तेन समस्यते । तदाहारो[2] । तदुप्पाओ[3] ॥

### कारादिभिश्च ॥२।३।२७॥

कारादिशब्दप्रकृतिकैः सुबन्तैः सह षष्ठ्यन्तं समस्यते । अंधगारो[4] । मणियारो[5] । सुवण्णयारो[6] ॥

### पुव्वादयोऽह्नेन षष्ठ्या ॥२।३।२८॥

पुव्वादिशब्दाः प्रथमान्ताः षष्ठ्यन्तेनाह्नशब्देन समस्यन्ते ॥

### अह्नस्याण्हः ॥१।४।४५ ॥

समासे उत्तरपदभूतस्याह्नशब्दस्याण्ह इत्यादेशः स्यात् । पुव्व-ण्हं[7] । मज्झण्हं[8] ॥

### सप्तम्या अलोपः ॥२।३।२९ ॥

समासावयवभूतायाः सप्तम्याः क्वचिल्लोपो न भवति । अन्तेवासी । उदगेचरो[9] । कण्ठेगुणो[10] । कण्ठेमालको[11] ॥

### संख्यार्थकास्समानाधिकरणैः समाहारे ॥२।३।३२॥

संख्यावाचकाः शब्दाः समानाधिकरणैः सुबन्तैः सह समाहारेऽर्थे समस्यन्ते ॥

---

१ अर्थदण्ड । २ तदाहार । ३ तदुत्पाद । ४ अन्धकार । ५ मणि-कार । ६ सुवर्णकार । ७ पूर्वाह्णम् । ८ मध्याह्नम् । ९ उदकेचर । १० कण्ठेगुण । ११ कण्ठेमालक ।

तिपदे दस्य तलोपौ ॥१।४।४६ ॥

तिपदशब्दे दकारस्य तकारलोपौ पर्यायेण भवत[1]। पस्य वकारे, तिवई, तिउनी, तिवदी। निषेधार्थके अ अण ण-शब्दे, समासे, अथिर[2]। अवहुँस्सुण[3]। अणंद्धादण्डो[4]। अणेक्काथाई[5]। पच्चर्गत्थ[6]। णण्णहा[7] ॥

रात्तेरुत्तरपदस्यात् ॥१।४।८०॥

उत्तरपदभूतस्य रात्तिशब्दस्याकारान्तादेशः स्यात्। चउराय[8]। चरमवरिसारत्तम्[9] ॥

जहण्णादीनामणुक्कोसादिषु मक् ॥४।४।७॥

जहण्णादिशब्दानामणुक्कोसादिषु परेषु मगागमः स्यात्समासे। "अजहण्णमणुक्कोसो" "अदुक्खमसुहा" "अगमगाइ" "सामाइयमादियाइ"[10]। गब्भमुद्देसो[11]। अणंतभागमब्भहिय[12]। जावताव[13] ॥

खधादावारस्यात्स्य लोप ॥१।४।४७॥

खधशब्दात्परस्याधारस्यावस्य लोपो वा स्यात्। खधेंरो। खधाधारो[14] ॥

पायवस्योवगमणे यस्य वस्य यवयोश्च ॥१।४।४८॥

पायवशब्दस्योवगमणे परे यस्य वस्य च यवद्वयस्य पर्या-

---

१ त्रिपदी। २ अस्थिरम्। ३ अबहुश्रुत। ४ अनर्थदण्ड। ५ अनेकस्थायी। ६ नान्यत्र। ७ नान्यथा। ८ चतूरात्रम्। ९ चरमवर्षारात्रम्। १० अजघन्यानुत्कर्षं, अदुःखासुखा, अगमगानि, सामायिकादिकानि। निर० ३—८ ॥ ११ गर्भोद्देश। १२ अनन्तभागाभ्यधिकम्। १३ यावत्तावत्। १४ स्कन्धधार ॥

येण लोपः स्यात्। पावोवगमण, पायोवगमण, पाउवगमण[1] ॥

अधोरवधेर्वस्य ॥१।४।४६॥

अधोशब्दात्परस्यावधेर्वस्य लोपः स्यात्। अंधोऽधी। अधोऽही[2] ॥

जत्तत्भ्यामनन्तरस्य ॥१।३।४३॥

आभ्यां परस्यानन्तरशब्दस्यादेर्दीर्घः स्यात्। हृस्य यकारे, जयाणन्तर[3]। तयाणन्तर[4] ॥

पुव्वस्य पो ॥१।३।४२॥

पुव्वशब्दस्यैकारोऽन्तादेशो वा स्यात्पिशब्दे परे समासे। जहण्णादित्वात्, पुव्विपि, पुव्वपि[5] ॥

आगतारस्यागार आरस्य ॥१।४।५०॥

आगन्तारशब्दस्यागारशब्दे परे आरस्य लोपो वा स्यात्। आगन्तगार[6] ॥

द्वयोरगतार ॥१।४।५१॥

आगतारागारशब्दयोरगतार इत्यादेशः स्यात्। अगंतार ॥

इज्जाया एसस्येस ॥१।४।५२॥

इज्जाशब्दात्परस्यैसस्येसादेशः स्यात्। पूर्वस्वरस्य लोपे, इंज्जिसो[7] ॥

---

१ पादपोपगमनम्। २ अधोऽवधि। ३ यदनन्तरम्। ४ तदनन्तरम्। ५ पूर्वमपि। ६ आगन्त्रागार। ७ इज्येष ॥

इमात्सन्धौ प्रथमाया ॥२।३।३०॥

इमशब्दात्सन्धिशब्दे परे प्रथमाया अलोपः स्यात् । अँयसन्धी ॥

एयारूवे वा ॥२।३।३१॥

इमशब्दादेयारूवशब्दे परे प्रथमाया अलोपो वा स्यात् । अँयमेयारूवे, इमेयारूवे ॥

विहवणाभ्या पते फसौ ॥१।४।५३॥

आभ्यामुत्तरस्य पतिशब्दस्यादेः फ स इत्येतावादेशौ पर्यायेण भवत.। बँणप्फई। वणस्सई। विहँप्पती, विहप्फती, विहस्सती ॥

ओर्जसादीनामुत्तरपदे ॥१।३।२४॥

जसादिशब्दानामुत्तरपदे परे ओकारान्तादेशो बहुल स्यात् । जँसोकित्ती, जसकित्ती । जँसोकामी । जँसोजीविय, जसजीविय । जसोवन्तो, जसवन्तो । जसोमन्तो, जसमन्तो । जँसोचंदे । जँसस्सरो । अहोणिसि । अँयोकवल । अँयोकुम्भी । अँयोगोलो । अँयोघणो । अँयोमय । अन्नोन्न । मँणोन्न । मँणोरमो । मणोसिला । मँणोहरो । मणकरण । मँणजोगो ।

---

१इमसन्धि । २अयमेतद्रूप । ३वनस्पति । ४बृहस्पति । ५यश कार्ति । ६ यश कामी । ७यशोजीवितम् । ८ यशस्वान् । ९यशश्चन्द्र । १०यशस्कर । ११ अहर्निशम् । १२ अय कवलम् । १३ अयस्कुम्भी । १४अयोगोल । १५ अयोघन । १६ अयोमयम् । १७ अन्योऽन्यम् । १८मनोज्ञ । १९ मनोरम । २० मन शिला । २१ मनोहर । २२मन करणम् । २३ मनोयोग ॥

मैणदंडो । मैणपओगो । तैमोकाइय । दोग्गैती । तैवोकम्म तवोमय । वाटुलकातकचिक्ति्यम् । मणोरहो । सोग्गइ ॥

उत्ते यस्य ॥१।४।५४॥

तेयशब्दस्योत्तरपदे परे यकारस्योकारो वा स्यात् । तेउैकाए । तेउप्पभो । तेउलेसी, तेयलेसा । तेयलेस्सो ॥

चरेऽहेराः ॥१।३।४५॥

अहेशब्दस्य चरशब्दे परे आकारोऽन्तादेशः स्यात् । अैहाचरो ॥

पायस्य मूले यस्य ॥१।४।५५॥

पायशब्दस्य यस्य लोपो वा स्यान्मूलशब्दे परे । पामूलं, पायमूलं । (गरुडासणादीनां सिद्धये मध्यपदस्य नित्य वक्तव्यः) गरुडखरिसमासणा=गैरुडासण । उदअपुण्णमुदरं=उैद-ओदर । पुव्वमारब्भ पच्छिमो=पुैव्वपच्छिमो ॥

॥ इति तत्पुरुषसमासप्रकरणम् ॥

# अथ द्वन्द्वसमासप्रकरणम् ॥

अनेक समूहे ॥२।३।३३॥

समुदायेऽर्थे वर्तमानमनेक प्रथमान्तं प्रथमान्तेन सह वा

१ मनोदण्ड । २ मन प्रयोग । ३ तम कायिक । ४ दुर्गति । ५ तप कर्म । ६ तपोमयम् । ७ मनोरथ । ८ सद्गति । ९ तेजस्काय । १० तेज प्रभ । ११ तेजोलेश्या । १२ तेजोलेश्य । १३ अधश्चर । १४ पादमूलम् । १५ गरुडासनम् । १६ उदकोदरम् । १७ पूर्वपश्चिम ॥

समस्यते। पिज्जो य दोसो य=पिज्जदोसा। पण्हवागरण। सीउ-ण्ह, सीउसिण ॥

## दियानिस्योरम्वोत्तरपदयो ॥१।३।४६॥

द्वन्द्वे उत्तरपदभूतयोर्दियानिसिशब्दयोरमन्तादेशो वा स्यात्। राइंदिय। अहोनिस। अहोनिसि ॥

## आणात्पाणस्योत् ॥१।३।४७॥

आणशब्दात्परस्य पाणशब्दस्योकारान्तादेशो वा स्यात्। आणापाणू, आणापाणो ॥

॥ इति द्वन्द्वसमासप्रकरणम् ॥

---

# अथ बहुव्रीहिसमासप्रकरणम् ॥

## अप्रथमाऽन्यपदार्थे प्रथमा ॥२।३।३४ ॥

प्रथमाभिन्नान्यपदार्थे वर्तमानं प्रथमान्तं समानाधिकरणेन स-मस्यते। उदिण्णाणि बलवाहणाणि जस्स स उदिण्णबलवाह-णे ॥

## अत्र लिङ्गमन्यपदार्थस्य ॥२।३।३५॥

अस्मिन् समासेऽन्यपदार्थस्येव लिङ्गं स्यात्। एगाऽऽइच्चा जस्स एगाइच्च ॥

---

१ प्रेमद्वेषौ। २ प्रश्नव्याकरणम्। ३ शीतोष्णम्। ४ रात्रिंदिवम्। ५ अहर्निशम्। ६ आनपान। ७ उदीर्णबलवाहन। उत्त० १८-१ ८ एकाऽऽगम् ॥

क्वचिद्व्यधिकरणेनापि ॥२।३।३६ ॥

उक्तसमासः क्वचिद्व्यधिकरणेनापि भवति। तंसि अप्पियं करण जेणं तदप्पियकरणे। कण्ठेकालो। कण्ठेमालो ॥

अस्मात्को वा ॥२।३।३७

उक्तसमासात्परः कप्रत्ययो वा स्यात् ॥

इल्के पूर्वस्य ॥२।३।३८॥

कप्रत्यये परं पूर्वस्वरस्येकारो वा स्यात्। "सत्तसत्तमियं भिक्खुपडिम" ॥

निषेधार्थकेभ्योऽस्त्यर्थस्य लोपः ॥२।३।३९॥

निषेधवाचकेभ्यः अ-अण-ण-शब्देभ्यः परस्य वर्त्तमानार्थकशब्दस्य लोपः स्यादुक्तसमासे। ण विज्जमाणो उऊ जीसे सा अणोउया ॥

दिग्वाचका मध्ये ॥२।३।४०॥

दिगर्थकाः शब्दा मध्ये वाच्ये समस्यन्ते। उत्तराए पुरत्थिमाए य अन्तरालं जा दिसा सा उत्तरपुरत्थिमा ॥

ओदणादारस्य ॥१।३।४८॥

अणशब्दात्परस्यारशब्दस्यादेरोकारः स्यात्। णत्थि आरं पारं जस्स स अणोरपारे ॥

अवदग्गस्य वा ॥१।३।४९॥

अणशब्दात्परस्यावदग्गशब्दस्यादेरोकारो वा स्यात्।

---

१तदर्प्पिताकरणा। २कण्ठेकाल। ३कण्ठेमाल। ४ सप्तसप्तमिका भिन्नप्रतिमाम्। औप०१५। ५अनृतुका। ६उत्तरपूर्वा। ७अनारपार ॥

णत्थि अनदग्गमन्त जस्स सो अणोवदग्गे, अणवदग्गे ॥

आमोसादोसहेरोसस्य ॥१।३।७९॥

आमोसशब्दात्परस्यासहिशब्दस्यौसस्य लोप स्यात् । आमोसही ॥

ईरुद्धस्य मुहे ॥१।३।५२॥

उद्धशब्दस्य मुहशब्दे परे ईकारान्तादेश स्यात् । उद्धी-मुहे ॥

त्तुमुमो काममणयो ॥४।४।६९॥

त्तुम् उ प्रत्यययोरन्त्यस्य लोपो वा स्यात् । काममणशब्दो परयो । काउकामो । गंतुमणो । संपाविउकामो, सपाविउकामो ॥

सरिसस्य तयात्रयो ॥४।४।६७॥

सरिसशब्दस्य तयावयशब्दयो. परयोरन्त्यस्य लोप स्यात् ॥

तये सस्य त ॥४।४।६८॥

सरिसशब्दस्य सकारस्य तकार स्यात्तयाशब्दे परे । सरित्तया । सरिन्वया । "दों भंते ! सरित्तया सरिव्वया" ॥

---

१ अनवग्र । २ आमर्षौषधि । ३ ऊर्ध्वमुख । ४ कर्तुकाम । ५ गन्तुमना । ६ सम्पादितुकाम । ७ द्वौ भगवन्! सदृक्त्वचौ सदृग्वयसौ भग० १-८ ॥

अच्छेर. ॥१।३।५३॥

उत्तरपदस्याच्छिशब्दस्याकारान्तादेशः स्यात् । "हेरिमेलामउलमल्लियच्छाण" ॥

दिवड्ढाड्ढाइज्जाद्धुट्ठाः सार्द्धैकद्वयत्रयेषु॥१।४।५६॥

दिवड्ढ-अड्ढाइज्ज-अद्धुट्ठ-शब्दाः क्रमेण सार्द्धैकसार्द्धद्वयसार्द्धत्रयेष्वर्थेषु निपात्यन्ते । दिवड्ढ । अड्ढाइज्ज । अद्धुट्ठ ॥

असौ पस्य फः ॥१।४।५७॥

पोपसर्गस्य फादेशः स्यादसुशब्दे परे । पगया असु जत्थ तं फासुय ॥

एकादयः संख्यायां दसादिभिरधिकान्ताः ॥२।३।४१॥

संख्यावाचका अधिकशब्दान्ता एकादयः शब्दा दसादिशब्दैः संख्यावाचकैः सह समस्यन्ते ॥

एकार्थकानां दसपण्णणउइषु दीर्घं ॥१।३।५४॥

एकत्वसंख्यावाचकानामेक-एक्क-एग-इक्क-इग-शब्दानां दीर्घोऽन्तादेशः स्याद्दस-पण्ण-णउइ शब्देषु परेषु । एकारस । एक्कारस । एकाणउई । एकावण्ण ॥

इगेगस्य ॥१।४।५८॥

इगशब्दस्य सस्वरगकारस्य लोपो वा यालशब्दे परे ।

---

१ हरिमेलामुकुलमल्लिकाक्षाणाम् । ओव० ३१ । २ द्व्यर्द्धम् । ३ अर्द्धतृतीयम् । ४ अर्द्धचतुष्कम् । ५ प्रासुकम् । ६ एकादश । ७एकनवति । ८ एकपञ्चाशत् ॥

## चत्तालीसस्य यालतालीसौ ॥१।४।५६॥

उत्तरपदस्य चत्तालीसशब्दस्यैतावादेशौ पर्यायेण वा स्त । इयाल, इगयाल, एगतालीस ।

## दोर्वेवी ॥१।४।६०॥

दुशब्दस्य वे वि इत्यादेशौ पर्यायेण भवत । वेइंन्दिया । विदल । विसरीर ॥

## वा सख्यार्थके ॥१।४।६१॥

दुशब्दस्य बाऽऽदेश स्यात्सख्यावाचकशब्दे परे । बारस । बावन्न । बाणउई । बायाल ॥

## दुवा दसे ॥१।४।६२॥

समासे दसशब्दे परे दुशब्दस्य दुवा इत्यादेश स्यात् । दुवालस ॥

## तेरे ॥१।३।५६॥

सख्यावाचकस्य तिशब्दस्यैकारान्तादेश समासे उत्तरपदे परे । तेरस । तेवीसे । तेतीसं , तेत्तीसा । तेयाल , तेयाली । तेवण्णा । तेवंग । तेइंदियाँ ॥

## चतोरत पूर्वस्य ॥१।३।५७॥

समासे पूर्वपदस्य चतुशब्दस्याकारस्य दीर्घः स्यात् । चाउं-

---

१ एकचत्वारिंशत् । २ द्वीन्द्रिया । ३ द्विदलम् । ४ द्विशरीरम् । ५ द्वादश । ६ द्विपञ्चाशत् । ७ द्विनवति । ८ द्विचत्वारिंशत् । ९ द्वादश । १० त्रयोदश । ११ त्रयोविंशति । १२ त्रयस्त्रिंशत् । १३ त्रिचत्वारिंशत् । १४ त्रिपञ्चाशत् । १५ त्रिवर्ग । १६ त्रीन्द्रिया । १७ चतुष्कायम ॥

कोणं। चाउद्दसी ॥

चोः सङ्ख्यावाचके ॥१।३।५८॥

चतुशब्दस्य चो इत्यादेशः स्यात्सङ्ख्यावाचके परे। चोद्दस। चोवीस। चोतीस, चोत्तीस। चोयाल, चोयालीस। चोसट्ठि, चउसट्ठि ॥

सत्तरेर्हश्च ॥१।४।६५॥

उत्तरपदस्य सत्तरिशब्दस्यादेर्हकारश्चकारात्वकारो वा स्यात्। चोहत्तरिं, चोवत्तरिं ॥

चतुरचुलावसीतौ ॥१।४।६६॥

चतुशब्दस्य चतुर चुल इत्यादेशो वा स्तोऽसीतिशब्दे परे। चउरासीइ, चुलसीइं ॥

पणस्य द्वि० ॥१।४।११६॥

पणशब्दस्योपधाया द्वित्वं वा स्यात्समासे। पण्णरस, पनरस। पण्णहत्तर, पनहत्तर। पण्णवीस, पणवीस।

पणाल्लोप० ॥१।४।६४॥

पणशब्दात्परस्य सट्ठिशब्दस्यादेर्लोपः स्यात्। पण्णट्ठि ॥

छाट्टयोश्च ॥१।३।५५॥

अनयोर्दीर्घोऽन्तादेशः स्यात्प्रायेण ॥

---

१ चतुर्दशी। २ चतुर्दश। ३ चतुर्विंशति। ४ चतुस्त्रिंशत्। ५ चतुश्चत्वारिंशत्। ६ चतुःषष्टि। ७ चतुःसप्तति। ८ चतुरशीति। ९ पञ्चदश। १० पञ्चसप्ततिः। ११ पञ्चविंशति। १२ पञ्चषष्टि ॥

### सट्ठेर्वे ॥१।४।६३॥

उत्तरपदस्य सट्ठिशब्दस्यादेर्वेकारो वा स्यात् । छावट्ठि, छासट्ठि । छायालीस । अट्ठावण्ण । अट्ठावय॥

### छस्य सोर्दसे ॥१।४।६७॥

छशब्दस्य सो इत्यादेश स्याद्दसशब्दे परे । सोलस । छलसीइ ॥

### सत्तस्य वीसादौ ॥१।४।६८॥

पूर्वपदस्य सत्तशब्दस्य दीर्घोऽन्तादेशः स्याद्वीसादौ परे। सत्तावीस । सत्तावन्न ॥

### सीयाले ॥१।४।६९॥

सत्तशब्दस्य सी इत्यादेश स्याद् यालशब्दे परे । सीयाल, सीयालीस ॥

### दसस्य रलौ ॥१।४।७०॥

उत्तरपदस्य दसशब्दस्यादेर्दकारस्य रेफो लकारश्च स्यात् ॥

### अट्ठात्सस्य ॥१।४।७१॥

अट्ठशब्दात्परस्य दसशब्दस्य सकारस्य लोपो वा स्यात् । अट्ठार । अट्ठारस ॥

---

१ षट्षष्टि । २ षट्चत्वारिंशत् । ३ अष्टपञ्चाशत् । ४ अष्टापद, अर्थस्य । ५ षोडश । ६ षडशीति । ७ सप्तविंशति । ८ सप्तपञ्चाशत् । ९ सप्तचत्वारिंशत् । १० अष्टादश ॥

अट्टे ट्टस्य डो यालयालीसयो ॥१।४।७२॥

अट्टशब्दस्य ट्टस्य डः स्याद् याले यालीसे च परे । अट-याल[1] । अडयालीस ॥

एकस्योणे अउण समुदितस्य ॥१।४।७३॥

एकशब्दस्योनशब्देन समासे समुदितस्य अउण इत्यादेशो वा स्यात् । अउणवीसं[2], एगूणवीस, एकूणवीस । अउणत्तीस[3] । अउणपन्नं[4] ॥

आभीक्ष्ण्यवीप्सयोर्द्विः ॥२।३।४३॥

आभीक्ष्ण्ये वीप्सायां च द्योत्ये नाम्नो द्वित्वं स्यात् । उद्दिओद्दिए[5] ॥

गच्छादीनां पूर्वस्य दीर्घो द्वितीयस्येर्बहुलम् ॥२।३।४४॥

गच्छादीनां द्वित्वे पूर्वपदस्यान्त्यस्य दीर्घो द्वितीयपदस्ये-कारोऽन्तादेशश्च बहुलं स्तः । गच्छागच्छि[6] । गुम्मागुम्मि[7] । सिढासढि[8] ॥

दण्डादीनामतिशयेऽनुस्वारश्च ॥२।३।४५॥

दण्डादिशब्दानामतिशये द्योत्ये द्वित्वे पूर्वस्यानुस्वारा-न्तागमश्च प्रायेण भवति । दडदंडेण[9] । वामवामेण[10] । जीव-जीवेण[11] । थक्कथक्कं[12] । दुंदुं[13] ॥

---

१ अष्टचत्वारिंशत् । २ एकोनविंशति । ३ एकोनत्रिंशत् । ४ एकोनपञ्चाशत् ५ उद्दिनोद्दिन । ६ गच्छागच्छि । ७ गुल्मागुल्मि । ८ सण्ठासण्ठि ॥ ९ दण्डदण्डेन । १० वामवामेन । ११ जीवजीवेन । १२ स्थकस्थकम् (स्थितस्थितम्) । १३ द्रुतद्रुतम् ॥

## उरसुह-मज्झाना तृतीयार्थे च ॥२।३।४६॥

उर सुह मज्झशब्दाना तृतीयार्थे चकारादाभीक्ष्णयादौ च न्योत्ये द्वित्व स्यात् । उरउरेण । सुहसुहेण । मज्झमज्झेण ॥

## मासस्य नैरन्तर्ये ॥२।३।४७॥

मासशब्दस्य नैरन्तर्ये द्योत्ये द्वित्व स्यात् । मासमासेण ॥

## दवदवात्स्स ॥२।३।४८॥

अस्मात्सो वा स्यात् । दवदवस्स । दवदव ॥

## दिसिपरयोरोत् ॥२।३।४९॥

अनयोर्द्विरुक्तौ आदेरोकारान्तादेशः स्यात् । दिसोदिसिं । परोप्पर ॥

## अण्णस्य वा ।२।३।५०॥

आदेरण्णशब्दस्योकारान्तादेशो वा स्याद्विरुक्तौ । अण्णोण्ण । अन्नमन्न ॥

## कोडेरात् ॥२।३।५१॥

द्विरुक्तौ पूर्वस्य कोडिशब्दस्याकारान्तादेश स्यात् । कोडाकोडी ॥

## जीवादयो ग्गाहादिभिर्गिण्हादीनामनुप्रयोगे ॥२।३।५२॥

द्वितीयान्ता जीवादिशब्दा ग्गाहादिप्रकृतिकैर्द्वितीयान्तै

१ उरउरसा । २ सुखसुखेन । ३ मध्यमध्येन । ४ मासमासेन । ५ द्रुतद्रुतम् । ६ दिशिदिश् । ७ परस्परम् । ८ अन्योऽन्यम् । ९ कोटिकोटि ॥

सह समस्यन्ते गिण्हादिधातूनामनुप्रयोगे। "विजेय तक्कर जीवग्गाह गिण्हन्ति" जीवन्त गृह्णन्तीत्यर्थः। "अन्तगमण गमिस्सामि" नाया० १–१५। अन्त गमिष्यामीत्यर्थः॥

॥ इति बहुव्रीहिसमासप्रकरणम् ॥

॥ इति समासप्रकरणम् ॥



# अथ तद्धितप्रकरणम् ॥

## तद्धिता ॥२।४।१॥

वक्ष्यमाणाः प्रत्ययास्तद्धितसञ्ज्ञाः स्युः ॥

## अदणिकेकणिञ्जेज्जणियेयणिमेल्लकमेत्ता• ॥२।४।२॥

अत् अण् इक इकण् इज्ज इज्जण् इय इयण् इम इल्ल क मेत्त, इत्येते प्रत्यया वक्ष्यमाणेष्वर्थेषु यथाप्रयोग स्युः॥

## ताद्धितेपु स्वराद्या डित ॥२।४।३॥

तद्धितेषु स्वराद्याः प्रत्यया ड्वित्वद्भवन्ति। बाहुलकात् तं-दुलेज्ज[१], तदुलिज्ज। गंगेयो[३]। भाइणिज्जो[४], भाइणेज्जो ॥

## स्वार्थे प्रथमाया ॥२।४।४॥

प्रथमान्तसमर्थान्नाम्नः स्वार्थे उक्तप्रत्ययाः स्युः। अच्चन्तियं[५]। जायमेत्तं[६], जायमित्त। णियडिल्लया[७]। उत्तरिल्लं[८]। "तद्धिता-

---

१ विजेयं तस्कर जीवग्राह गृह्णन्ति। नाया० २–३६। २ तन्दुलायम्। ३ गाङ्गेय। ४ भागिनेय। ५ आत्यन्तिकम्। ६ जातमात्रम्। ७ निकृतिमत्ता। ८ औत्तरेय॥

न्तादपि तद्धितान्तरम्" आणिल्लिय । वा० (छाच् चलो वा वाच्यो) छच , छल ॥

महादालयल्लिया ॥२।४।६॥

महच्छब्दात्स्वार्थे आलय ल्ल लिय प्रत्ययाः स्युः। महालओ, मल्ल्लो, महल्लओ, महल्लगो, महल्लिओ ॥

पोत्ताटुल्ल ॥२।४।१०॥

पोत्तशब्दात्स्वार्थे उल्लप्रत्ययः स्यात् । पोत्तुल्लओ ॥

वद्धमुक्कयोरिल्ले ॥२।४।१२॥

अनयोरिल्लप्रत्यये टिलोपो न स्यात् । वद्धेल्लगो । मुक्केल्लगो ॥

लोभादिभ्यस्त्ता ॥२।४।१३॥

प्रथमान्तसमर्थेभ्यो लोभादिभ्यः स्वार्थे त्ताप्रत्ययः स्यात् । गवेसणत्ता ॥

तयोर्यस्त ॥२।४।१४॥

त्ताप्रत्ययस्य तकारयोर्यकारादेशो बहुलं स्यात् । लोभया । सीलेया । लीणेया । अणुकंपणया । गवेसणया । दुक्खणया । तिप्पणया । पिट्टणया ॥

---

१ आनीतकम् । २ पल्लकम् । ३ महत्क । ४ पौत्रक ।५ वद्धक । ६ मुक्तक । ७ गवेषणिका । ८ लोभक । ६ शीलकम् । १० लीनकम् । ११ अनुकम्पनकम् । १२ दुःखनकम् । १३ तिप्पनकम् । १४ पिट्टनकम् ॥

मडस्येल्ले ॥१।४।११७॥

मडस्योपधाया लोपः स्यादिल्लप्रत्यये । मईल्लिओ ॥

सव्वणामादावन्तिः परिमाणे च ॥२।४।१५॥

सव्वणामसञ्ज्ञकाच्छब्दात्परिमाणेऽर्थे आवन्तिप्रत्ययः स्याच्चकारात्स्वार्थेऽपि । एयावन्ति ॥

पढमादिल्लु. ॥२।४।१७॥

पढमशब्दात्स्वार्थे इल्लुप्रत्ययः स्यात् । पेढमिल्लुग ॥

एकार्थकादागीणियेया असहाये ॥२।४।१६॥

एकार्थकात्प्रथमान्तसमर्थाद् आगि--इणिय -इय--प्रत्ययाः स्युरसहाये । एगागी, एगाणिए, एकाणिए । ऐकिया ॥

निसीहेरुच्चारणे क. ॥२।४।१८॥

प्रथमान्तान्निसीहिशब्दादुच्चारणेऽर्थे कप्रत्ययः स्यात् । 'निसीहि'इत्युच्चारणम् । निसीहिगा, निसीहिया ॥

एय. साऽस्मै दीयते साऽस्य देवता ॥२।४।१९॥

प्रथमान्तसमर्थात्साऽस्मै दीयते साऽस्य देवता इत्यनयोरर्थयोरेयः प्रत्ययः स्यात् । दक्खिणा इमस्स दिज्जइ त्ति दक्खिणेओ । अग्गी देवया इमस्स त्ति अग्गेओ ॥

---

१ मृतक । २ एतावान् । ३ प्रथमक । ४ एकाकी । ५ एकका । ६ निशीथिका, नैषेधिकी वा । ७ दाक्षिण्य । ८ आग्नेय ॥

अल्पे च ॥२।४।१९॥

प्रथमान्तसमर्थादल्पेऽर्थेऽप्युक्तप्रत्ययाः स्युः । अप्पो अंसो=अंसिया । अल्पार्थकप्रत्ययान्ता प्रायेण स्त्रियाम् ॥

इतस्तदस्य सजात पत्तादिभ्य ॥२।४।२०॥

प्रथमान्तसमर्थेभ्य. पत्तादिभ्योऽस्य सजातमित्यर्थे इतप्रत्यय. स्यात् । पत्त इमस्स सजात=पत्तिय । गब्भिय ॥

अतिशये तर ॥२।४।२१॥

प्रथमान्तसमर्थादतिशयेऽर्थे तरप्रत्यय. स्यात् । अइसएण तुच्छ=तुच्छतर ॥

तरस्य के ॥१।३।५६॥

तरप्रत्ययस्य दीर्घोऽन्तादेश स्यात्कप्रत्यये परे। बहुतराए। अप्पतराए ॥

इट्ठो धम्म्यादिभ्य ॥२।४।२३॥

धम्म्यादिशब्देभ्योऽतिशयेऽर्थे इट्ठप्रत्ययः स्यात् । अइसएण धम्मी=धम्मिट्ठो । अहम्मिट्ठो ॥

इज्ज स्थेरादिभ्य ॥२।४।२४॥

थेरादिभ्योऽतिशयेऽर्थे इज्जप्रत्यय' स्यात् ॥

थेरधीरपियानामिज्जे थधपा ॥१।४।७४॥

एपामिज्जे परे थ ध प इत्येते आदेशा' क्रमेण स्यु' । थेज्ज । धेज्ज । पेज्ज ॥

---

१अंसिका । २पत्रितम् । ३गर्भितम् । ४बहुतरक । ५अल्पतरक । ६धर्मिष्ट । ७ अधर्मिष्ट । ८ स्थैर्यम् । ९ धैर्यम् । १० प्रियतरम् ॥

## तदर्हति करोति ॥२।४।२५॥

द्वितीयान्तसमर्थादर्हति करोतीत्यनयोरर्थयोरियादिप्रत्ययाः स्युः। अभिसेकमर्हति=अभिसिक्को[1]। उवसादित्वाद्द्विः। अलंकार करेड त्ति=अलकारिए[2] ॥

## णित्यादिस्वरस्य वृद्धिः ॥१।३।२४॥

णित्प्रत्यये आदिस्वरस्य वृद्धिः स्यात्। आलकारिए[3]। आभियोगिए[4] आभिग्गहिए[5] ॥

## अत्पसिणस्येये ॥१।३।६०॥

पसिणशब्दस्यैकारस्याकारः स्यादियप्रत्यये। पसिण करेड त्ति=पासिणिए[6] ॥

## तेन निर्वृत्त क्रीतं चरति व्यवहरति जीवति गृह्यते ॥ ॥२।४।२६॥

तृतीयान्तसमर्थान्नाम्न एष्वर्थेषूक्तप्रत्ययाः स्युः। अब्भोवगमेन निव्वत्ता=अब्भोवगमिया[7]। आहिगरणिया[8]। दण्डेण निव्वत्त=दंण्डिम[9]। सण्ण कीय=सेतिय, सइय ॥

## इये णायस्य णेया ॥१।४।७५॥

णायशब्दस्य णेयादेशः स्यादिये परे ॥

## उदियस्य वा ॥१।४।७६॥

णायशब्दसम्बन्धिन इयप्रत्ययस्यादेरुकारो वा स्यात्। णाएण ववहरति=णेयाउओ, णेयाइयो। तेल्लेण जीवइ=तेल्लिओ ॥

---

१ आभिषिक्य। २ अलङ्कार्य। ३ आलङ्कारिक। ४ आभियोगिक। ५ आभिग्रहिक। ६ प्राश्निक। ७ आभ्युपगमिकी। ८ आधिकरणिकी। ९ दण्डिम। १० शनिकम। ११ नैयायिक। १२ तैलिक॥

णित्यहारयणादीनामुत्तरस्यादेर्वृद्धि· ॥२।४।२७॥

अहारयणादिशब्दानामुत्तरपदस्यादेर्वृद्धि स्याण्णिति परे। अहारयण चरइ=अहारायणिय। तेयाहिय, तेआ-हिय ॥

चक्खोरस्य सट् ॥४।४।८॥

चक्खुशब्दात्परस्याऽप्रत्ययस्य सडागमः स्यात्। चक्खु-णा गिण्हिज्जइ=चक्खुस ॥

अदणो नक्षत्रेण युक्त काल ॥२।४।२६॥

नक्षत्रवाचकेभ्योऽस्सिण्यादिशब्देभ्यस्तृतीयान्तेभ्यो युक्तः काल इत्यर्थे अद्-अण् प्रत्ययौ स्त ॥

अस्सिणया इणस्योसाणि ॥१।४।७७॥

अस्सिणीसम्बन्धिन इणस्योसादेश स्यादणि परे। अ-स्सिणीए जुत्ता पुण्णमासी=आसोई, अस्सोई। आसाढी। कत्तिया। जेट्ठामूला। फग्गुणी। विसाही ॥

मिगसिरस्यादेरति ॥१।३।६१॥

अस्य पूर्वकारस्याकार स्यादप्रत्यये। मगसिरा। सोवि-ट्ठी। पोट्ठवती। पोसी। मागी। चेत्ती।

१ यथारात्निकम्। २ तैजाहितम्। ३ चाक्षुषम्। ४ आश्विना। ५ आषाढी। ६ कार्त्तिकी। ७ ज्येष्ठामूली। ८ फाल्गुनी। ९ वैशाखी। १० मार्गशीर्षा। ११ श्राविष्ठा। १२ प्रौष्ठपदी। १३ पौषी। १४ माघी। १५ चैत्री।

## साऽस्मिन् पौर्णमासीति सञ्ज्ञायाम् ॥२।४।३०॥

अस्मिन्नर्थेऽणप्रत्ययः स्यात्सञ्ज्ञायाम् । आसोई[1] पुण्णमासी अस्सि मासम्मि=आसोओ मासो ॥

## वातात्तेनोपहतमीन ॥२।४।३१॥

तृतीयान्तवातशब्दादुपहतमित्यर्थे ईनप्रत्ययः स्यात् । वातेण उवहयं=वातीण, वाईण[2] ॥

## तत आगत ॥२।४।६॥

पञ्चम्यन्तसमर्थादागत इत्यर्थे उक्तप्रत्ययाः स्युः । पमंगाओ आगय=पामंगिय[3] । पारितोसिय[4] ॥

## तस्येदमपत्य समूहो वृत्तिर्व्यापार ॥२।४।७॥

षष्ठ्यन्तसमर्थादिद अपत्य समूहः वृत्तिः व्यापारः इत्येतेष्वर्थेपूक्तप्रत्ययाः स्युः । कविलस्स इमं=काविलिय[5] । उत्तरस्स इमं=उत्तरिज्ज[6] । कौसेज्ज[7] । वेसालीए अवच=वेसालिओ । "वेसालियसावए"[8] । सगटाण समूहो=सागंट[9] । कवोयस्स वित्ती=कावोया[10] । वा० (सपतेरेयणेज्जणो वक्तव्यो) । सावैतेय, सावतेज्ज, सापतेय, सापतेज्ज[11] ॥

---

१ आश्विनो मास । २ वातीनम् ( वातोपहतम् ) ॥ ३ प्रामङ्गिकम् । ४ पारितोषिकम् । ५ कापिलिकम् । ६ औत्तरेयम् । ७ कौशेयम । ८ वैशालिकश्रावक । भग० २-१ ॥ ९ शाकटम् । १० का॰।१-१ । ११ स्वापतेयम् ।

## अद्णोरुतोऽत् ॥१।३।६२॥

उकारस्यावादेशः स्यादप्रत्ययाणप्रत्यययोः । पाण्डवा । पण्डवा । पोरेवो । लाघव । अज्जव । मद्दव ॥

## चउछाभ्यां कस्य द्वि ॥२।४।३२॥

चउछशब्दाभ्यां परस्य कप्रत्ययस्य द्वित्वं स्यात् । चउक्क । छक्क ॥

## चोरवणिजाभ्यामिज्जस्यादे ॥४।४।७१॥

आभ्यां परस्येज्जप्रत्ययस्यादेर्लोपः स्यात् । चोरस्स वावारो=चोज्ज, चोरिय । वणियस्स वावारो=वाणिज्ज ॥

## अप्पणादिधियेज्जियौ ॥२।४।३३॥

अप्पणाशब्दात्षष्ठ्यन्तात्सम्बन्धिन्यर्थे इधियेज्जियौ भवतः । अप्पणस्स इमं=अप्पणिधिय, अप्पणिज्जिय ॥

## वातादोल ॥२।४।३४॥

षष्ठ्यन्ताद्वातशब्दात्समूहेऽर्थे ओलप्रत्ययः स्यात् । वातोली ॥

## उपमादीनामणि द्वि ॥१।४।११८॥

एषामुपधाया द्वित्वं स्यादणि परे । पयातीण समूहो=पायत्त ॥

---

१ पौरव । २ आर्जवम् । ३ मार्दवम् । ४ चतुष्कम् । ५ षट्कम् । ६ चौर्यम् । ७ वाणिज्यम् । ८ आत्मीयम् । ९ पादातम् ॥

## अजिनस्येतोऽणि ॥१।३।६३॥

अजिनशब्दस्येकारस्य दीर्घः स्यादणि। आईणं,आजीनं[1]।

## पडिहार्या आत ए ॥१।३।६४॥

पडिहारीशब्दस्याकारस्यैकारः स्यादणि परे । पडिहारीए इम=पाडिहेर[2] ॥

## पयडेर्यः ॥१।४।११९॥

पयडिशब्दस्योपधाया यकारः स्यादणि परे । पायर्य[3] ॥

## पयावत्यादीनां टेरलोपोऽणि ॥२।४।११॥

पयावतिप्रभृतिशब्दाना टेर्लोपो न स्यादणि। पायावच[4]। सेणावच[5] ॥

## ममस्येदिययो ॥१।३।६५॥

ममशब्दस्य दीर्घोऽन्तादेशः स्यादि-इय-प्रत्यययोः। ममाई[6], ममाईण[7] ॥

## इये सिलेसस्य सेस ॥१।४।७८॥

सिलेसस्य सेसादेशः स्यादियप्रत्यये । ससेसियं[8] ॥

## विरोयणादीनामइः पूर्वस्य ॥२।४।२८॥

विरोयणादिशब्दानां णिति परे आदिस्वरस्य अइ इत्यादेशो वा स्यात् ॥

---

१ आजिनम् । २ प्रातिहार्यम् । ३ प्राकृतम् । ४ प्राजापत्यम् । ५ सैनापत्यम् । ६ ममत्वी, । ७ ममायिन , मामक । ८ साश्लेषिकम् ॥

वेइरोयण, वेरोयण। वइसदेवो, वेसदेवो। वइसेसिण, वेसेसिण। वइसाहो, वेसाहो। जइणो, जेणो। वइचित्त, वेचित्त। वइधम्म, वेधम्म। कइलासो, केलासो ॥

## परात्कीय ॥२।४।३५॥

षष्ठ्यन्तात्परशब्दात्सम्बन्धिन्यर्थे कीयप्रत्ययः स्यात्। परकीय ॥

## रायाण् पणो यस्येत् ॥२।४।३६॥

रायशब्दात्सम्बन्धिन्यर्थे पणप्रत्ययः स्याद्यस्यैकारो वा स्यात्। रेइण्ण, रायण्ण ॥

## कम्माणणको ॥२।४।३७॥

कम्मशब्दात्सम्बन्धिन्यर्थे णकप्रत्ययो स्त। कम्मण, कम्मअ ॥

## तत्रभवोऽधिकृत ॥२।४।३८॥

सप्तम्यन्तसमर्थादनयोरर्थयोरक्तप्रत्ययाः स्युः। अब्भतरे भवो=अब्भतरिण, अब्भतरगो। औवरिल्ल। पुरत्था भव =पुरच्छिम, पुरत्थिम। पच्छिम। अन्तिम। उवरिल्ल, उवरिम। भण्डार अहिगडो=भाण्डारिण ॥

---

१ वैरोचनम्। २ वैश्वदेव। ३ वैशेषिक। ४ वैशाख। ५ जैन। ६ वैचित्र्यम्। ७ वैधर्म्यम्। ८ कैलाश। ९ राजन्यम्। १० कार्म्मणम्। ११ आभ्यन्तरक। १२ औपरम। १३ पौरस्त्यम्। १४ पाश्चात्यम्। १५ उपरितन। १६ भाण्डारिक ॥

## उदीई-पडीईभ्यां णड् ॥२।४।३८॥

आभ्यां भवार्थे णड्प्रत्ययः स्यात्। उदीण, उईण। पडीण। वा० (दीवादिभ्यो भवार्थे इचस्योपसंख्यानम्) दीविच ॥

## पाईतो णो दट् चेत ॥२।४।३९॥

पाईशब्दाद्भवार्थे णप्रत्ययः स्यादीकारस्य दडागमो वा स्यात्। पादीण, पाईणं ॥

## अति पच्छिमस्य पच्चच्छिमपच्चत्थिमो ॥१।४।७९॥

पच्छिमशब्दस्य पच्चच्छिम-पच्चत्थिमावादेशौ पर्यायेण भवतोऽप्रत्यये। पँचच्छिम,पचत्थिम ॥

## पहादिभ्यस्तत्र साधुरेज्जण् ॥२।४।४०॥

पहादिभ्यः सप्तम्यन्तेभ्यः साधुरित्यर्थे एज्जण्प्रत्ययः स्यात्। पहे साहू=पाहेज्ज ॥

## पासादिल्लस्तत्र शेते ॥२।४।४१॥

सप्तम्यन्तात्पासशब्दाच्छेते इत्यर्थे इल्लप्रत्ययः स्यात्। पासिल्लओ ॥

## उत्तरपदादहेरदीणो ॥२।४।४२॥

उत्तरपदभूतादहेरुपसर्गादप्रत्ययेणप्रत्ययौ भवतः। परज्जो, पराहीणो ॥

---

१ उदीचीनम्। २ प्रतीचीनम्। ३ द्वैप्यम्। ४ प्राचीनम् ॥

वहेर्भगुरकावणि ॥४।४।६॥

वहिशब्दस्याणिपरे भगुरकावागमो पर्यायेण भवतः। वोहिम, वाहिर ॥

मज्झान्मश्च ॥२।४।४३॥

मज्झशब्दादुक्तेऽर्थे मप्रत्ययश्चकारादुक्तप्रत्ययाश्च स्युः। मज्झम, मज्झिम, मज्झिल्ल ॥

इदिणमन्ताश्च तदस्त्यस्यास्मिन् ॥२।४।४४॥

प्रथमान्तसमर्थादस्यास्तीत्यर्थे अस्मिन्नस्तीत्यर्थे च इद् इणूमन्त प्रत्ययाश्चकारादुक्तप्रत्ययाश्च यथाप्रयोग स्युः। अगार अत्थि जस्स सो=अगारी। कोडुम्बी ॥

आन्मन्तस्य व ॥१।४।८१॥

अकारात्परस्य मन्तप्रत्ययस्यादेर्वकारः स्यात्। वण्णव, वण्णवन्तो। भगव, भगवन्तो। आत्किम्, वीइमन्तो। जातिमन्तो। तिसूलो इमस्स अत्थि=तिसूलिओ। गठी अत्थि अस्सि=गठिल्लो। माया अत्थि इमस्स=माइल्लो। कलुणा अत्थि इमस्स=कलुणो ॥

आउसाद्न्त ॥२।४।४५॥

आउसशब्दादुक्तेऽर्थे न्तप्रत्ययो वा स्यात्। आउसो, आउसन्तो। वा० (गोमिर्वक्तव्यः) गोमी, गोमिणी ॥

---

१ वाह्यम्। २ मध्यमम्। ३ कुटुम्बी। ४ वर्णवान्। ५ भगवान्। ६ वाचिमान्। ७ जातिमान्। ८ त्रिशूलिक। ९ ग्रन्थिमान्। १० मायावी। ११ करुण। १२ आयुष्मान्। १३ गोमान् ॥

छवेरिये दीर्घः ॥१।३।५०॥

छविशब्दस्य दीर्घोऽन्तादेशः स्यादियप्रत्यये परे। छवीइ[१]॥

जसादिभ्यो वा ॥१।४।८२॥

जसादिशब्देभ्यः परस्य मन्तप्रत्ययस्यादेर्वकारो वा स्यात्
जसवन्तो, जसमन्तो, जसोमन्तो[२]। आयारवन्तो, आयार-
मन्तो॥

णातेश्च ॥१।४।८३॥

णातिशब्दात्परस्य मन्तस्यादेर्वकारः स्यात्। णातिवन्तो,
णाइव॥

इति सड्ढाया ह्रस्वः ॥१।३।६६॥

सड्ढाशब्दस्य ह्रस्वोऽन्तादेशो वा स्यादिप्रत्यये। सड्ढिइ।
पक्षे इलोपे-सड्ढी॥

वत्सस्य वुसिर्मन्ते ॥१।४।८४॥

वत्सशब्दस्य वुसि इत्यादेशः स्यान्मन्ते परे। वुसिमन्तो॥

जयादिभ्य इण ॥२।४।४६॥

एभ्य उक्तेऽर्थे इणप्रत्यय. स्यात्। जइणो। दोसिणो।
परहिणो॥

किमेर्ण ॥२।४।४७॥

उक्तेऽर्थे किमिशब्दाण्णप्रत्ययः स्यात्। किमिणो॥

---

१ छविमान्। २ यशस्वान्। ३ आचारवान्। ४ ज्ञानवान्।
५ श्रद्धावान्। ६ जयी। ७ द्वेषी। ८ परपक्षी। ९ ... । १० कृमिमान्॥

पङ्कादीनां सञ्ज्ञायां दीर्घः ॥१।४।८५॥

पङ्कादिशब्दानां दीर्घोऽन्तादेशः स्यान्मन्तप्रत्यये सञ्ज्ञा-याम् । पङ्कावनी ॥

इलो गन्धादिभ्यः ॥२।४।४८॥

उक्तेऽर्थे गन्धादिभ्य इलप्रत्ययः स्यात् । गन्धिलो[1] । तुन्दिलो[2] ॥

जडाया जडुलजडियालौ ॥२।४।४९॥

उक्तेऽर्थे जडाशब्दस्य जडुल जडियाल इत्येतौ वा निपा-त्येते । जडुलो, जडियालो, जडिलो[3] ॥

रयात्स्सल ॥२।४।५०॥

उक्तेऽर्थे रयशब्दात्स्सलप्रत्ययो वा स्यात् । रयस्सला[4], रइला ॥

पम्हादिभ्यो लः ॥२।४।५१॥

उक्तेऽर्थे पम्हादिशब्देभ्यो लप्रत्ययः स्यात् । पम्हलो[5] । पत्तलो[6] । तणुलो[7] ॥

आलुर्दयादिभ्यः ॥२।४।५२॥

उक्तेऽर्थे दयादिशब्देभ्य आलुप्रत्ययः स्यात् । दयालू[8] । वीसरणालू[9] ॥

---

१ गन्धिल । २ तुन्दिल । ३ जटिल । ४ रजस्वला । ५ पक्ष्मल । ६ पत्रल । ७ तनुल । ८ दयालु । ९ विस्मरणालु ॥

## उलंज्जाया[1] ॥२।४।५३॥

उक्तेऽर्थे लज्जाशब्दादुप्रत्ययः स्यात् । लज्जू ॥

## जसादिभ्योऽसिस्सी ॥२।४।५४॥

उक्तेऽर्थे जसादिशब्देभ्योऽस्सिस्सीप्रत्ययौ पर्यायेण भवतः। जसंसी, जसस्सी[2] । तेयंसी, तेयस्सी[3] । वंचसी, वचस्सी[4] । ओयसी, ओयस्सी[5] ॥

## त्तत्तणौ तस्य भावे ॥२।४।५५॥

षष्ठ्यन्तसमर्थाद्भाव इत्यर्थे त्त-त्तण प्रत्ययौ स्तः । अपरत्त[6] । उस्सुगत्तं[7] । अंबत्तण[8] । तीणत्तण[9] । पभुत्तण[10] । अंधत्तण[11] ॥

## अरिप्रभृतिभ्यस्ता ॥२।४।५६॥

एभ्यस्ताप्रत्ययः स्याद्भावेऽर्थे । अरित्ता[12] । उप्पलकंदत्ता[13] ॥

## जहातहादेरियणौ ॥२।४।५७॥

आभ्यां भावे अट-इयणप्रत्ययौ भवतः ॥

## तस्येयणि द्वि ॥२।४।५८॥

जहातहशब्दस्य तकारस्य द्वित्वं वा स्यादियणि परे । आहत्तहियं, आहातहियं । जहातहं, अहातहं[14][15] ॥

---

१ लज्जालु । २ यशस्वी । ३ तेजस्वी । ४ वर्चस्वी । ५ ओजस्वी । ६ अपरत्वम् । ७ उत्सुकत्वम् । ८ आम्रत्वम् । ९ तृणायत्वम् । १० प्रभुत्वम् । ११ अन्धत्वम् । १२ आरित्वम् । १३ उत्पलकन्दता । १४ याथातथ्यम् । १५ यथातथम् ॥

## इणो जडादिभ्य ॥२।४।६०॥

जडादिशब्देभ्यो भावे इणप्रत्यय, स्यात्। जेडिणो। णिगिणो, णगिणो। अग्गि,नैग्ग। मुंण्डिणो। संघाडिणो।

## इय इस्सरादिभ्य ॥२।४।६१॥

इस्सरादिशब्देभ्यो भावे इयप्रत्यय' स्यात्। इस्सरिय। अज्जविय। सामग्गिय॥

## अप्पाद्बहो क ॥२।४।६२॥

अप्पपूर्वकाद्बहुशब्दाद्भावे कप्रत्ययश्च स्यात्। अप्पाब॰ हुक, अप्पाबहुग, अप्पाबहुय, अप्पाबहुत्त॥

## उवमादिभ्योऽण् ॥२।४।६३॥

एभ्यो भावेऽण्प्रत्यय' स्यात्। ओवम्म। आहिक। दोहग्ग। सोहग्ग,सोभग्ग। स्वार्थेऽप्यण्यस्य प्रवृत्ते, तेलुक्क, तेलोक्क॥

## जुवाणस्यातो वस्य द्विर्वा ॥१।३।६७॥

जुवाणशब्दस्याकारस्य ह्रस्वो वकारस्य द्वित्व वा स्यादणि परे। जुव्वण, जोव्वण, जोवण, जोवणग॥

---

१ जडत्वम्। २ नग्नत्वम्। ३ नाग्न्यम्। ४ मुण्डत्वम्। ५ सङ्घटत्वम्। ६ ऐश्वर्यम्। ७ आर्जवम्। ८ सामग्र्यम्। ९ अल्पबहुत्वम्। १० औपम्यम्। ११ आधिक्यम्। १२ दौभाग्यम्। १३ सौभाग्यम्। १४ त्रैलोक्यम्। १५ यौवनम्॥

द्व्यादीनां च ॥१।४।१२०॥

एषामुपान्त्यस्यैकारादेशः स्यादणि परे । दोच्चं । अंत-
न्नय । वेयावच्च ॥

वियावडादियण् च ॥२।४।६४॥

अस्मात्कारे इयण्प्रत्ययः स्याद्यादण् । वेयावडिय ॥

थेर-धीर-सहायानामेरेरायानामेज्ज ॥१।४।८६॥

एषामेरस्येरस्यायस्य च एज्जादेशः स्यादणि परे । थेरस्स
भावो=थेज्ज, थिज्ज । धेज्ज, धिज्ज । सेज्ज, सहिज्ज ॥

कलुणस्यौत् ॥१।३।६९॥

कलुणशब्दस्यादिस्वरस्यौकारादेशः स्यादणि परे । कलु-
णस्स भावो कोलुण्ण ॥

एदहिपुरयोरेच्चे ॥१।३।६८॥

अहिपुरशब्दयोरेकारोऽन्तादेशः स्याच्चशब्दे परे । आहे-
वच्च । पोरेवच्च ॥

सफले फस्य हः ॥१।४।८७॥

सफलशब्दे फकारस्य हकारो वा स्यादणि । सोहल्ल,
साफल्ल ॥

---

१ दौत्यम् । २ आनन्तर्यम् । ३ वैयावृत्यम् । ४ वैयावृत्तिक्य ।
५ स्थैर्यम् । ६ धैर्यम् । ७ साहाय्यम् । ८ कारुण्यम् । ९ आधिपत्यम् ।
१० पौरपत्यम् । ११ साफल्यम् ॥

सुकुमारस्य सुगमल ॥१।४।८८॥

अस्याणि परे सुगमल इत्यादेश[1] स्यात् । सोगमल्लं ।

विकारप्रधानयोरण्मयो ॥२।४।६५॥

षष्ठ्यन्तस्मर्थाद्विकारे प्रधाने चार्थेऽण् मयप्रत्ययो स्त[2] । अयोमय । फालिहमय । वअामय । वक्कमय ॥

अङ्गादीना मये ॥१।३।७०॥

अङ्गादिशब्दाना दीर्घाऽन्तादेश स्यान्मये परे । अंगामय । वाल्कात-रययामय, रययमय ॥

भिओञ्च शिष्ये ॥२।४।६६॥

षष्ठ्यन्ताञ्जिउशब्दाच् यमत्यय स्याच्छिष्येऽर्थे । भिउंणो सिस्सो भिउश्चो ॥

ईरत्तादिभ्योऽभूततद्भावे करभवयोर्योगे ॥२।४।६७॥

अत्तादिशब्देभ्यो द्वितीयान्तेभ्योऽनथाभूतस्य तथात्वसम्पत्तेऽर्थे करभवधातुयोगे ईप्रत्यय स्यात् । अत्तीकरेइ । उम्मरीकरा । ण्णोभूग । दरिद्दीहूय ॥

मोल्यादिभ्य ईतो लोप ॥२।४।६८॥

मोल्यादिशब्देभ्य परस्येप्रत्ययस्य लोप स्यात् । मोलिकडा ॥

---

१ सौकुमार्यम् । २ स्फटिकमयम् । ३ वचामयम् । ४ वाल्मयम् । ५ मदनमयम् । ६ रजतमयम् । ७ भृगो शिष्या भार्गव । ८ आर्द्रीकरोति । ९ उन्मत्तीकृत । १० द्रवीभूत । ११ दरिद्रीभूत । १२ मौलीकृत ॥

**इंगालादिभ्यो भवस्यादेर्द्वि ॥१।४।८९॥**

इंगालादिशब्देभ्यः परस्य भवधातोरादेर्द्वित्वं स्यात् ।

इंगालब्भूया[1] । आरियब्भूया[2] । तत्तकव्वल्लकब्भूया[3] ।

**मणादिभ्य ईतोऽसुट् ॥४।४।१०॥**

मणादिभ्यः परस्येकारस्यासुडागमः स्यात् । मर्णसीकरेइ[4] ॥

**अम्हादिषु दिसाद ॥२।४।६६॥**

अम्हादिशब्देषूपपदेषु दिसधातोरप्रत्ययः स्यात् ॥

**दिसे पूर्वस्याति ॥१।३।७१॥**

अप्रत्ययान्तदिसधातौ परे पूर्वस्य दीर्घोऽन्तादेशः स्यात् ॥

**दिसस्य रलावति ॥१।४।६०॥**

अप्रत्यये दिसधातोरादेर्दकारस्य रेफलकारौ पर्यायेण भवतः । अम्हारिसो[5] । तुम्हारिसो[6] । जारिसो[7] ॥

**ईत्तादितः ॥१।४।६१॥**

तशब्दात्परस्य दिसस्येकारस्य दीर्घो वा स्यात् । तालिसो, तालीसो, तारिसो[8] ॥

**ईच कस्य ॥१।३।७३॥**

कशब्दस्येकारश्चकारादेकारोऽन्तादेशः स्याद्दिसे परे ॥

---

१ अङ्गारभूता । २ तार्किकभूता । ३ तप्तकवल्कभूता । (भग॰ ३-१) ।
४ मासीकरोति । ५ अस्मादृश । ६ युष्मादृश । ७ यादृश । ८ तादृश ॥

काद्दे ॥१।३।७८॥

कशब्दात्परस्य दिसधातोर्देर्लोपो वा स्यात् । केरिसो, कीरिसो, कीसो, केसो, केसी ॥

एदिमस्य ॥१।३।७२॥

घप्रत्ययान्तदिसधातौ परे इमशब्दस्यैकारोऽन्तादेश स्यात् ॥

इमो लोपो वा त्तो हुणा दिसेपु ॥१।३।७७॥

इमशब्दस्येमो लोपो वा स्यात् त्तो हुणाप्रत्ययोर्दिसधातौ च परे । इमेरिसो, एरिसो, एलिसो ॥

इमात्तस्य क्ख ॥१।३।७५॥

इमशब्दात्परस्य दिसधातोः सस्य क्खो वा स्यात् । एलिक्खो ॥

इदेतस्य ॥१।३।७४॥

एतशब्दस्यादेरिकारो वा स्याद्दिसे परे। इयारिसो, एयारिसो ॥

समानाच्छ ॥१।३।७६॥

समानशब्दात्परस्य दिसधातोः सस्य च्छ इत्यादेशो वा स्यात् । सरिच्छो, सरिसो, सलिसो ॥

---

१ धास्य । २ इदृश । ३ ईदृक्ष । ४ एतादृश । ५ सदृक्ष ॥

एताद्रूवः सदृशे ॥२।४।७०॥

एतच्छब्दात्सदृशेऽर्थे आरूवप्रत्ययः स्यात्। [1]एयारूवे। [2]इमेयारूवे, अयमेयारूवे ॥

सङ्ख्यायां ति कजतेभ्यः ॥२।४।७१॥

एभ्यः सङ्ख्यायामर्थे तिप्रत्ययः स्यात्। का सङ्ख्या जेसिं= कति, कइ। जति, जइ। तति, तइ ॥ "[3]जस्स जइ इंदियाइं तस्स तइ भणियव्वाइं" ॥

एतजतेभ्यः परिमाणे मन्तावतियातियातिल्लाः ॥२।४।७२॥

एभ्यः परिमाणार्थे मन्त आवतिय-तिय-तिल्लप्रत्ययाः स्युः। [4]एताव, एयाव। एतावन्तो, एयावन्तो। [5]जाव, जावन्तो। [6]ताव, तावन्तो ॥

जादावन्ती च ॥२।४।७३॥

जशब्दात्परिमाणेऽर्थे आवन्तीप्रत्ययश्च स्यात्। [7]जावन्ती ॥

आवतियस्यातश्च ॥४।४।७३॥

एतसम्बन्धिन आवतियस्याकारस्य चकारादेतस्य तस्य लोपः स्यात्। [8]एवइय, एवतिए। [9]जावइय, जावतिए। [10]तावइय, तावतिए ॥

---

१ एतद्रूप। २ इमेतद्रूप। ३ यस्य यति इन्द्रियाणि तस्य तति भणितव्यानि। (भग० ८-१०)। ४ एतावान्। ५ यावान्। ६ तावान्। ७ यावान्। ८ एतावतिक। ९ यावतिक। १० तावतिक ॥

### तियस्य वा ॥१।४।६२॥

तियप्रत्ययस्यादेढित्व वा स्यात् ॥

### एनस्य तियत्तिलयोरत ॥४।४।७२॥

एनस्याकारस्य लोप. स्यात्तिय-त्तिलप्रत्यययो । इत्तिण, एत्तिण । जत्तिण[2], जतिण । तत्तिण[3], ततिण । एत्तिलो । जत्तिलो । तत्तिलो ॥

### कादेवतिय ॥२।४।७४॥

कशब्दात्प्रथमान्तात्परिमाणेऽर्थे एवतिपप्रत्यय. स्यात् । केरतिण[4], केवडण ॥

### अनवधारणे एयावन्ती ॥२।४।७५॥

कशब्दादनवधारणेऽर्थे ण्यावन्तीप्रत्ययः स्यात् । केयावन्ती ॥

### पूरणे म ॥२।४।७६॥

सङ्ख्यावाचकेभ्य' षष्ठयन्तेभ्य पूरणेऽर्थ मप्रत्यय. स्यात् सत्तम[5] । अट्ठम[6] । नवम । अट्ठारसमं[7] । वीसइम[8] ॥

### दुतिभ्या डीयातियातियच्चण ॥२।४।७७॥

आभ्या पूरणेऽर्थे डीय तिय तीय चण्प्रत्यया' स्यु. ॥

### दोर्विर्डीय-तिय-तीयेषु ॥१।४।६३॥

दुशब्दस्य वि इत्यादेश. स्याड्डीय तिय तीयप्रत्ययेषु परेषु। विइय, वीय, विनीय ॥

---

१ यावान्, एतावान् । २ यावान् । ३ तावान् । ४ कियान् । ५ सप्तमम् । ६ अष्टमम् । ७ अष्टादशम् । ८ विंशतितमम् । ९ द्वितीयम् ॥

तीयस्य ज्ज ॥१।४।१२१॥

द्वशब्दात्परस्य तीयप्रत्ययस्योपधाया ज्ज इत्यादेशः स्यात्। वितिज्ज, दोच ॥

तेरञ्चणि च ॥१।४।६४॥

तिशब्दस्याकारान्तादेशः स्याद्वीय-तिय-तीय-चणप्रत्ययेषु। तीय, तइय, ततीय, तच ॥

इश्छात् ॥२।४।७८॥

छशब्दात्पूरणेऽर्थे इप्रत्ययः स्यात्। छट्ठ ॥

त्थश्च तो ॥२।४।७९॥

चतुशब्दात्पूरणेऽर्थे त्थप्रत्ययः स्यात्। चेउत्थ, चउत्थ ॥

सखेज्जात्ति ॥२।४।८०॥

सखेज्जशब्दात्पूरणेऽर्थे तिप्रत्ययः स्यात्। संखेज्जई ॥

कादिभ्यो निर्धारणे ॥२।४।८२॥

कादिशब्देभ्यो निर्धारणेऽर्थे तरप्रत्ययः स्यात्। कयरो। एगयरो। इयरो। अन्नयरो ॥

आभीक्ष्ण्ये बह्वादिभ्य सो ॥२।४।८१॥

आभीक्ष्ण्येऽर्थे बह्वादिभ्यः सोप्रत्ययः स्यात्। बहुसो। खेमसो। पंगामसो। एगन्तसो ॥

कुम्भकादिभ्य परिमाणे ॥२।४।८२॥

कुम्भकादिशब्देभ्यः परिमाणेऽर्थे सोप्रत्ययः स्यात्। कुंभगसो ॥

---

१ द्वितीयम्। २ तृतीयम्। ३ षष्ठम। ४ चतुर्थम्। ५ सख्येयतम। ६ कतर। ७ एकतर। ८ इतर। ९ अन्यतर। १० बहुश। ११ क्षेमश। १२ प्रकामश। १३ एकान्तश। १४ कुम्भकश ॥

### एकात्सि ॥२।४।८३॥

आभीक्ष्ण्येऽर्थे एकशब्दात्सिप्रत्ययश्च स्यात् ।[1]एकसि॥

### पञ्चमीसप्तमीभ्यां तो ॥२।४।८४॥

पञ्चम्यन्तात्सप्तम्यन्ताच समर्थात्तोप्रत्ययः स्यात् ।[2]ग मओ, गमनतो।[3]दव्वओ,दव्वतो । पिट्ठओ,पिट्ठतो । [5]कम्मओ, कम्मतो । [6]अत्थओ, अत्थतो । धम्मओ,धम्मतो ॥

### त्रिदुहो ह्रस्व ॥१।३।८०॥

तोप्रत्ययान्तदुशब्दस्य ह्रस्वोऽन्तादेशः स्यात्तोप्रत्यये परे। दुहओ ॥

### अभ्यावृत्तौ संख्यार्थेभ्यः क्खुत्तो ॥२।४।८५॥

संख्यावाचकेभ्यो वारंवारमित्यर्थे क्खुत्तोप्रत्ययः स्यात्। दुक्खुत्तो । तिक्खुत्तो । सहस्सक्खुत्तो ॥

### अणन्तादिभ्यः क्खुत्तो कस्य ॥४।४।७४॥

अणन्तादिशब्देभ्यः परस्य क्खुत्तोप्रत्ययस्य कस्य लोपो वा स्यात् । अणन्तखुत्तो, अणन्तक्खुत्तो ॥

### एकात्सि ॥२।४।८६॥

एकशब्दादुक्तेऽर्थे सिप्रत्ययः स्यात् । [13]एकसि ॥

### प्रकारे हा तृतीयायाः ॥२।४।८७॥

तृतीयान्तसमर्थेभ्यः प्रकारेऽर्थे हाप्रत्ययः स्यात् । [14]सव्वहा । अण्णहा । अट्ठहा । जहा । तहा ॥

---

१एकश । २एका । ३द्रव्यत । ४पृष्ठत ।५कर्मतः । ६अर्थत । ७धर्मत ।८द्विधा।९द्विकृत्व ।१०त्रिकृत्व ।११सहस्रकृत्व ।१२ अनन्तकृत्व ।१३एकश ।१४सर्वथा ।१५ अन्यथा।१६अष्टधा।१७यथा। १८तथा ॥

## एक्कासि ॥२।४।८३॥

आभीक्ष्ण्येऽर्थे एकशब्दात्सिप्रत्ययश्च स्यात् । [१]एक्कसि ॥

## पञ्चमीसप्तमीभ्यां तो ॥२।४।८४॥

पञ्चम्यन्तात्सप्तम्यन्ताच्च समर्थात्तोप्रत्ययः स्यात् । [२]एग यओ, एगयत्तो । [३]दुव्वओ, दव्वत्तो । [४]पिट्ठओ, पिट्ठत्तो । [५]कम्मओ, कम्मत्तो । [६]अत्थओ, अत्थत्तो । [७]धम्मओ, धम्मत्तो ॥

## तसि दुहो हस्व ॥१।३।८०॥

शप्रत्ययान्तदुहशब्दस्य हस्वोऽन्तादेशः स्यात्तोप्रत्यये परे । [८]दुहओ ॥

## अभ्यावृत्तौ सङ्ख्यार्थेभ्य क्खुत्तो ॥२।४।८५॥

सङ्ख्यावाचकेभ्यो वारंवारमित्यर्थे क्खुत्तोप्रत्ययः स्यात् । [९]दुक्खुत्तो । [१०]तिक्खुत्तो । [११]सहस्सक्खुत्तो ॥

## अणतादिभ्य क्खुत्तो कस्य ॥४।४।७४॥

अणतादिशब्देभ्यः परस्य क्खुत्तोप्रत्ययस्य कस्य लोपो वा स्यात् । [१२]अणतखुत्तो, अणतक्खुत्तो ॥

## एक्कास्सि ॥२।४।८६॥

एकशब्दात्केऽर्थे स्सिप्रत्ययः स्यात् । [१३]एक्कस्सि ॥

## प्रकारे हा तृतीयाया ॥२।४।८७॥

तृतीयान्तसमर्थेभ्यः प्रकारेऽर्थे हाप्रत्ययः स्यात् । [१४]सव्वहा । [१५]अण्णहा । [१६]अट्ठहा । [१७]जेहा । [१८]तेहा ॥

---

१एकश । २एकत । ३द्रव्यत । ४पृष्ठत । ५कर्मत । ६अर्थत । ७धर्मत । ८द्विधा । ९द्विकृत्व । १०त्रिकृत्व । ११सहस्रकृत्व । १२ अनन्तकृत्व । १३एकश । १४सर्वथा । १५अन्यथा । १६अष्टधा । १७यथा । १८तथा ॥

जताभ्यां हहमौ ॥२।४।८८॥

जतशब्दाभ्यां प्रकारेऽर्थे ह-ह-प्रत्ययो च भवतः । जेह, जह । तेह, तह ॥

धा च ॥२।४।८९॥

प्रकारेऽर्थे धाप्रत्ययोऽपि स्यात् । तधा ॥

इयरस्येहरा ॥२।४।९०॥

इयरशब्दस्य प्रकारेऽर्थं इहरा इति वा निपात्यते । ईहरा, इयरहा ॥

कादहाहमिहेण्णा ॥२।४।९१॥

प्रकारेऽर्थे कशब्दादह-अहम्-इह-इण्णा-प्रत्ययाः स्युः । कह, कह, किह, किण्णा ॥

इमस्येत्थम् ॥२।४।९२॥

इमशब्दस्य प्रकारेऽर्थे इत्थमिति निपात्यते । इत्थं, इत्थ ॥

एकात् त्तश्च ॥२।४।९३॥

सप्तम्यन्तादेकशब्दात् त्तप्रत्ययश्च स्यात् । एगत्त ॥

त्थः सप्तम्या इमादिभ्यः ॥२।४।९४॥

सप्तम्यन्तसमर्थादिमादिशब्दात् त्थप्रत्ययः स्यात् ॥

तोत्थयोरेस् ॥२।४।९५॥

इमशब्दस्यैसादेशः स्यात्तो त्थप्रत्ययपयोः । ऐत्थ, एत्थ । ईयरत्थ ॥

---

१यथा । २तथा । ३ इतरथा । ४ कथम् । ५ इत्थम् । ६ एकत्र । ७ अत्र । ८ इतरत्र ॥

डमाड्डहमौ च ॥२।४।९५॥

सप्तम्यन्तेमशब्दाद् ह हप्रत्ययौ च भवत. ॥

मस्य तो णिह-दाणि-ह-ह तरेषु ॥२।१।५०॥

इमशब्दस्य मस्य लोप स्यात्तो णि दाणि ह-ह तरप्रत्ययेषु परेषु । इह, इह ॥

इमजतकेभ्यस्तो. ॥२।४।५६॥

एभ्यस्तोप्रत्ययस्यादेश्छित्व वा स्यात् । इत्तो, एत्तो, इतो, इओ । अतो । कत्तो, कओ ॥

अहिहण्हत्थ कात् ॥२।४।६७॥

सप्तम्यन्तात्कशब्दाद् अहि-इह एह प्रत्ययाश्च स्यु । कहि, किह, कण्ह, कत्थ ॥

उरकस्य तो त्थ हिसु ॥१।३।८२॥

कशब्दस्योकारान्तादेशो वा स्यात् तो त्थ हिंप्रत्ययेषु परेषु । कुत्तो, कुओ, कुत्थ ॥

जपगामाभ्यामाए ॥२।४।६८॥

पञ्चम्यन्तसमर्गाभ्यामाभ्यामाएप्रत्ययश्च स्यात् । जाँए, जत्तो, जओ, जनो । पर्गामाए, पगामतो ॥

---

१ इह । २ डा । ३ अत । ४ कुत । ५ कहिं, कुत्र । ६ कुत । ७ या । ८ प्रकामा ॥

तादादोतयश्च ॥२।४।९९॥

पञ्चम्यन्तात्तशब्दाद् आद्-ओ-ते-प्रत्ययाश्चकारादाए-प्रत्ययः स्यात् । तो । तो । तते, तए । ततो, तओ, तत्तो । ताए ॥

एहं च जात् ॥२।४।१००॥

पञ्चम्यन्तजशब्दात एहप्रत्ययश्च स्यात । जेण्ह ॥

अ जताभ्याम् ॥२।४।१०१॥

पञ्चम्यन्तजतशब्दाभ्यामग्प्रत्ययोऽपि स्यात् । जं । तं ॥

तस्मिन् काले दा सव्वादिभ्य. ॥२।४।१०२॥

सप्तम्यन्तसमर्थेभ्यः सव्वादिशब्देभ्यः काले इत्यर्थे दा-प्रत्ययः स्यात् ॥

सव्वस्य सो दे ॥१।४।६५॥

दाप्रत्यये सव्वशब्दस्य स इत्यादेशो वा स्यात । सया, सदा । सव्वया । अन्नया, अन्नदा । दकारस्य क्वचित्तकारश्र-वणात, सता । कता । जदा । तदा ॥

इमाणिंह-हुणा-दाणिम ॥२।४।१०३॥

सप्तम्यन्तसमर्थादिमशब्दात्काले इत्यर्थे णिंह-हुणा दा-णिप्रत्ययाः स्युः ॥

---

१ नत । २ यत । ३ सर्वदा । ४ अन्यदा । ५ सदा । ६ कदा । ७ यदा ॥

णिहमि य ॥२।४।१२२॥

इमस्योपधाया यकारादेश. स्यात् णिंप्रत्यये । इणिं, इयणिं । अंहुणा ॥

दाणिमि सर्वस्य लोप ॥२।४।१०३॥

इमशब्दस्याशेषस्य लोपो वा स्याद् दाणिप्रत्यये। दाणिं, इयाणिं, इदाणिं ॥

आहेहिंहिहियम कजतेभ्य ॥२।४।१०४॥

एभ्य. सप्तम्यन्तेभ्य आहे-हिं-हि हियप्रत्ययाश्च स्यु'। काहे, कहिं,कहि,कहिय । जाहे, जहिं,जहि,जहिय । ताहे, तहिं, तहि,तहिय। वा० (ताँदइरिद् च दो वक्तव्यः) तइ,तइया ॥

चिरार्थकेष्ववेव्वचौ ॥२।४।१०५॥

कशब्दात्परिमाणेऽर्थे एव एवचप्रत्ययो भवतश्चिरार्थक शब्देषु परेषु । केवचिर, केवचिर । केवचिरेण ॥

सुपूतद्धिताभ्यामिमिदीचिचिया ॥२।४।१०६॥

सुबन्तात्तद्धितान्ताच्च कशब्दात् इम् इद्-ई-चि चिय प्रत्यया वा स्यु । कैयाइ। केइ । केणइ । कस्सइ । कण्हुइ । कैयाई । केरिंचि, कुरिंचिय ॥

---

१ इदानीम् । २ अधुना । ३ इदानीम् । ४ कर्हि, कुत्र, क्व । ५ यर्हि, यत्र,यदा । ६ तर्हि, तत्र, तदा । ७ तदा । ८ कियच्चिरम् । ९कदाचित । १० केचित् । ११केनचित् । १२ कस्यचित् । १३ कुत्र-चित् । १४ क्वचित् ॥

---

*दाप्रपयस्य इद् वाच्य इत्यन्य ॥

## इमादिभ्यश्चणमपूर्वकः ॥२।४।१०७॥

इम-एक-जाव-तावादिशब्देभ्यश्चण प्रत्ययो वा स्यात्स विकल्पेनाम्पूर्वकश्च । इंमचण । एंकचण । जांवचणं, जावचण । तांवचण, तावचण ॥

## इणमादीनामेवे दीर्घः ॥१।३।८३॥

इणमादिशब्दानामुपधाया दीर्घो वा स्यादेवशब्दे परे । इणामेव । जामेव । तामेव । जेणामेव । तेणामेव । खिप्पामेव, खिप्पमेव । एवामेव, एवमेव ॥

॥इति तद्धितप्रकरणम्॥

॥ इति श्रीलोङ्कागच्छान्तर्गतलिम्बडीसम्प्रदायतिलकायमानपूज्यपादश्रीगुलाबचन्द्रजित्स्वामिचरणाम्बुजचञ्चरीक मुनिश्रीरत्नचन्द्रविरचितायां जैनसिद्धान्तकौमुद्यां पूर्वार्द्धं समाप्तम् ॥



१ इमचन । २ एकचन । ३ यावचन । ४ तावचन । ५ इममेव । ६ यमेव । ७ तमेव । ८ येनैव । ९ तेनैव । १० क्षिप्रमेव । ११ एवमेव ॥

तुम्हे मध्यमः ॥३।१।५॥

तथाभूते तुम्हशब्दे मध्यमः स्यात् ॥

शेषे प्रथम ॥३।१।६॥

उक्तविषयादन्यत्र प्रथमः स्यात् ॥

एकवचनबहुवचने ॥३।१।१७॥

उक्तत्वादयः प्रत्ययाः प्रत्येक प्रथमादिक्रमेणैकवचनबहु-वचनसञ्ज्ञाः स्युः। प्राकृते द्विवचन नास्ति। परस्मैपदात्मनेपद्विभागोऽपि नास्ति॥ गच्छ गतौ। गच्छइ, गच्छन्ति। गच्छसि, गच्छह॥

हिमिमोम्वनो दीर्घः ॥३।१।७॥

मपु परेषु धातोरन्त्याकारस्य दीर्घः स्यात्। गच्छामि, गच्छामो॥

| एकवचनम्. | बहुवचनम्. |
|---|---|
| प्र० सो गच्छइ। | ते गच्छन्ति। |
| म० तुम गच्छसि। | तुम्हे गच्छह। |
| उ० अहं गच्छामि। | अम्हे गच्छामो। |

प्रवर्त्तनायामेदिज्जौ ॥३।१।८॥

प्रवर्त्तनायामर्थे धातोरिज्ज-ए-प्रत्ययौ प्रथमादिषु त्रिषु, वचनयोश्च स्तः॥

इज्जस्य वा ॥३।१।९॥

इज्जप्रत्ययस्य दीर्घोऽन्तादेशो वा स्यात्। संयुक्ते विकल्पह्रस्वे, गच्छिज्ज गच्छेज्ज, गच्छिज्जा गच्छेज्जा, गच्छे॥

### ज्जाज्जेसिहमिमस ॥३।१।१०॥

प्रवर्तनार्थेकेज्जप्रत्ययान्तधातोः सिहमिमोप्रत्यया वा स्यु । गच्छेज्जासि, गच्छेज्जाह । गच्छेज्जामि, गच्छेज्जामो ॥

### आज्ञाया तिन्त्योरु सेर्हिलोपो ॥३।१।१३॥

आज्ञायामर्थे तिन्त्योरिकारस्योकार सिप्रत्ययस्य हि- लोपश्च पर्यायेण स्यात् । गच्छउ, गच्छन्तु । गच्छाहि, गच्छ, गच्छह, वा० (हे गच्छादीनामेवा वक्तव्य ) गच्छेह । गच्छामि, गच्छामो ॥

### भविष्यति हिस्सौ त्यादिषु ॥३।१।१६॥

भविष्यदर्थे धातोर्हिस्सा प्रत्ययो स्त्यादिप्रत्यये परे ॥

### हिस्सादीनामिट् ॥३।१।२०॥

हि स्स त्ता त्तण-तु त्था ऊण उ-मप्रत्ययानामिटागम स्यात् । गच्छिहिस्सइ गच्छिहिस्सन्ति । गच्छिस्ससि, गच्छिस्सह ॥

### गच्छादिभ्य स्सान्मे ॥४।४।७५॥

गच्छादिधातुभ्य परस्मात्स्सात्परस्य मेरन्त्यलोपो वा- स्यात् ॥

### गच्छात्सस्सस्यमेरम् ॥३।१।३१॥

गच्छधातो परस्य स्सप्रत्ययसहितस्य मिप्रत्ययस्यामा- देशो वा स्यात् । गच्छिस्सामि, गच्छिस्सं, गच्छं, गच्छिस्सामो ।

---

*गच्छ, पनि अपिया, पदस्व, चिह,उत् मन, आ हिंद, एत गच्छाद्य ॥

---

१ गच्छ, अहि इ, वच, सुच, साह, पुच्छ, रून, लज्ज, भन, अहि- याय, दान, गाह, पज, कर, निसाग, माह, एते गच्छाद्य ॥

हिप्रत्यये गच्छिहिति, गच्छिहिन्ति । गच्छिहिसि, गच्छिहिह ॥

मादौ हेरात् ॥३।१।३२॥

धातोर्विहितस्य हिप्रत्ययस्याकारोऽन्तादेशः स्यान्मकारादिप्रत्यये परे । गच्छिहामि, गच्छिहामो ॥

भूते इसु ॥३।१।३३॥

भूतेऽर्थे धातोरिसुप्रत्ययः स्यात् प्रथमादिषु त्रिषु वचनयोश्च । गच्छिसु ॥

उपसर्गा प्राक् ॥३।१।४९॥

उपसर्गा धातो प्रागेव प्रयोक्तव्याः ॥

अतेर्गच्छस्य गस्य ॥८।४।७७॥

अतिपूर्वकस्य गच्छधातोर्गस्य लोपो वा स्यात् । अइच्छइ, अइगच्छइ ॥ अच्छ उपवेशने ॥

अँच्छादेस्तेर. ॥३।१।५०॥

अच्छादिभ्यः परस्य तिप्रत्ययस्यैकारोऽन्तादेशो वा । अच्छइ । अच्छते ॥

---

१ दीर्घविधौ मच्चयास्यादेर्गच्छात्मान ही दार्न ॥

---

* अच्छ, अगिह, पच्चल, मम उच, उस, एम, कच, पट्ठुय, पडिक्कम, खुड, खुप, गाह, गल, चर, छिद, जुज्झ, नय्य, दल, दर, हिस, दुर, दव, दह, दर, कुल, उप पज्ज, पुच्छ, भुन, पलिमर, मन, रर, मस्-रक्स, नि मम, नि गार, लह, उत्तरिन, वर, वन्द, वस्म, वुस, वील, मह, वीमम, मन, जग, भाउ मान, मन्नूस, सेर, सेद, दा, दो, एतऽच्छादय ॥

अण प्राणने । अणइ ॥

आतोऽणस्य मक् त्यादौ ॥४।४।११॥

आपूर्वकाणधातोर्मगागमो भवति त्यादौ प्रत्यये । आणमइ, आणमन्ति । पाणमइ, पाणमन्ति । अप्पाह सन्देशे । अप्पाहइ । अप्पाहामो । अप्पाहे ॥ अप्पिण अर्पणे । अप्पिणामि । पचप्पिणइ ॥ अय गतौ । उदयन्ति । पलायइ ॥

अयादिभ्यस्त्था ॥३।१।६४॥

अयादिभ्यो भूतेऽर्थे त्थाप्रत्ययो वा स्यात् । विपलाइत्था । अस सत्तायाम् ॥

असस्य तिलुमिपु ॥४।४।७८॥

असधातोरन्त्याकारस्य लोप स्यात्ति-तु मिप्रत्ययेपु परेपु॥

सात्थ ॥१।४।७॥

सकारात्परस्य तकारस्य थकारः स्यात् । अत्थि ॥

न्तिन्तियास्वादे ॥४।४।७६॥

असधातोरादेरकारस्य नित्य लोप स्यादेपु परेपु । सन्ति ॥

---

* अगे [illegible] जय, टल, उद्-भर, धण, बाव, पज्ज, अणु मव, [illegible], मन, यम, अभि रम, ग्यि, उद्-नाम, [illegible], मुर, खद, दा, एवमादय ॥

सिहमोऽस्सस्य ॥४।४।८०॥

असधातोर्लोपः स्यात्सि ह मोऽप्रत्ययेषु । असस्येत्यनुवृत्तौ पुनरसस्येत्युपादानात्समुदायस्यैव लोपो नान्त्यस्य, सि । ह ।

मो वा ॥४।४।८१॥

असधातोर्लोपो वा स्यान्मिप्रत्यये । मि । पक्षे,

समेरसिरसस्य ॥३।१।५२॥

असधातोर्मिप्रत्ययसहितस्य असि इति निपात्यते । अम्मि, मो ॥

×असादिभ्यो या ॥३।१।११॥

प्रवर्तनार्थेऽसादिधातुभ्यो याप्रत्ययः स्यात् । ज्जदिज्जयोरपवादः ॥

असचयजाणणहेभ्यो यः ॥३।१।२१॥

एभ्यः परस्य याप्रत्ययस्येडागमः । सिया । अत्थु ।

असादिटीतो ॥३।१।३५॥

असधातोर्भूतेऽर्थे ईअप्रत्ययौ स्तः । हसीरपवादः ॥

आदेरिदीदिसीषु दीर्घः ॥३।१।५३॥

असधातोरादेर्दीर्घः स्यादि-ई-इसीप्रत्ययेषु परेषु । आसि, आसी । "[१]आसी विप्पो महाजसो" ॥

---

× अस, का, चय, छुभ, जप, [illegible], हण, एतेऽसादयः ।

---

१ आसीद्विप्रो महायशाः । (उत्त० २५-१)।

मोरुत्तमवहुत्वे सेट् ॥३।१।३६॥

असधातोर्भूतेऽर्थे उत्तमबहुवचने मोप्रत्यय[1] स्यात् स च मेट्। आसिमो। "आसिमो भायरा दोवि" आस उपवेशने। आसइ। आसे। आस॥

न्तौ गिलादीनां यक् ॥४।४।१२॥

गिलादिधातूना न्तिप्रत्यये यगागम स्यात्। गिलायन्ति। इ गतौ। इन्ति। इन्तु। सवर्णदीर्घे म्युक्ते ह्रस्वे च, पलिन्ति। मपलिन्ति। सवर्णदीर्घे, उईति, अईइ। सपरीइ॥

पटिपतिपरिभ्यो य ॥३।१।५५॥

एभ्य परस्येधातोर्य आदेशः स्यात्॥

पतेर्द्विरो ॥३।१।५६॥

पतेरुपधाया द्वित्व स्यादिप्रत्यये परे। पत्तियइ, पत्तियन्ति। पत्तियसि। पत्तियामि। पत्तियाहि॥

पादेश्चिण् मोहमाणानामेट् ॥३।१।५४॥

पोपसर्गात्परस्येधातोश्चिडागमो मोह्माणप्रत्ययानामेडागमश्च स्यात्। पेचेमो। पेचेह॥

इति पूर्वपरयोरे ॥३।१।५७॥

इधातोरिकारे परे पूर्वपरयोरकार एकादेश स्यात्।

---

१ आसिम भातरौ द्वावपि। (उत्त० २३—५)।

* गिला, आ-म्ला, चाग, जग्गा, मा, फिया, इन, सा, ल्ल, उर आ दा, परि आ-न्ला, सम आ ना, उद् गा, आ-भर, ल्ला, पन्हा, माण, मिन, परि मिन, जन्न, गा, परि-निर् गा, वेन, सिणा, हा, एते गिलादय॥

एजा । पन्निएज्जा । परिएज्जा ॥

विसमत्युन्द्वश्च ॥३।१।५८॥

वि सम्-अनि उत्परस्येधातोरेकार एकादेशः स्यात् । समेति, समेन्ति । अवेहि । उदेइ । वेइ ॥

न्तावेरद्वा ॥३।१।५९॥

एकारस्याकारो वा न्तिप्रत्यये परे । उवन्ति उविन्ति, उवेन्ति ॥

उदो ज्जो भविष्यति ॥३।१।६०॥

उत्पूर्वकादिधातोर्भविष्यदर्थे ज्जप्रत्ययः स्यात् । स्सादेरपवादः । उइज्जन्ति ॥

न्तौ वे ॥३।१।६१॥

वेरुपसर्गात्परस्येधातोर्यकारादेशः स्यात न्तिप्रत्यये परे । वियन्ति ॥

वेरदौ स्से ॥३।१।६२॥

वेरुपसर्गस्याकारोऽन्तादेशः स्यात् स्सप्रत्ययपरक इधातौ परे । वइस्सइ ॥ इ अध्ययने । अय नित्यमहिपूर्वकः ॥

इज्ज स्वार्थेऽपि ॥३।१।४८॥

धातोरिज्जप्रत्ययः स्वार्थेऽपि बहुल स्यात् । अहिज्जइ, अहिज्जन्ति । अहिज्जेज्जा । अहिज्जिस्सामि ॥

अहेरेस्तौ ॥४।४।१३॥

अहेरुपसर्गात्परस्येधातोर्यगागमः स्यात्तिप्रत्यये परे । अहीयइ । गच्छादित्वात्, अहीस्म । इच्छ इच्छायाम् । इच्छइ,

इच्छन्ति । इच्छामि । सवर्णदीर्घे सति हस्वे, पडिच्छइ, प-
डिच्छन्ति । पडिच्छेज्ज । पडिच्छन्तु । ईह इच्छायाम् । ई-
हइ । तेश्कारान्तादेशे तकारलोपे च, समीहए ॥ उञ्छ को-
ञ्छिरये । उञ्छन्ति ॥

उञ्छादीनां वा न्तौ ॥४।४।२५॥

णपा यगागमः वा स्यात् न्तौ परे । पलिउञ्छन्ति, पलिउञ्छ-
यन्ति । उठ सेचने । पुञ्छइ । पुञ्छे ॥ उञ्ज योगे ।

उपादुजस्य तौ ॥३।१।६५॥

उपोपसर्गात्परस्योजधातोरुपधाया द्वित्वं स्यात्तौ परे ।
उवउज्जइ ॥

न्तौ वे ॥३।१।६६॥

वे परस्योजधातोरुपधाया द्वित्वं स्यात् न्ता परे । निउं-
ज्जन्ति । उण प्रावरणे । पाउणिस्सामि । पाउणिज्इ । ऊह
वितर्के । अपोहए । एय कम्पने । एयइ एयति, एयन्ति ।
वि एयन्तेयइ वेयति । स्वरे परे यलोपे, एइस्सन्ति । एइस्सु ।
एस इच्छायाम् । एसइ । एसे । एसिज्जा, एसेज्ज ॥

अनोरेसादेरिम् ॥३।१।६३॥

अनुपूर्वकादेसधातोः परस्यैप्रत्ययस्येमादेशः स्यात् । अ-
न्वेसिं । कडुय गात्रविघर्षणे । कडुयए । कडुइस्सामि । कद
आक्रन्दने । कन्दइ । कन्दिसु ॥

* उञ, खञ, जञ, निञ्ज, भिञ, इञ, श्या ञ, निमन्त, भिञ,
कुञ उञ्छाश्च ॥

धातूनां कणणादीनाम् ॥३।४।११॥

धातूनां मध्ये कणणादीनामेव कस्य गकारयकारौ स्याताम्।
कणण भेदने। प्रायेणायमापूर्वकः। आयणइ। कत्थ श्ला-
घायां व्यक्तायां वाचि च। कत्थइ॥

अतेततिन्तेषूदः कसस्यात् ओत् ॥३।१।६०॥

उदः परस्य कस धातोरादेरकारस्योकारो वा स्यादत-इत-
ति-न्तेषु प्रत्ययेषु। कस आकर्षणे। उक्कोसइ, उक्कसइ। का
करणे। काइ॥

कादेर्न ॥३।१।२८॥

कादिगणपठितेभ्यः परस्य स्सादेरिड् न स्यात्। काहिइ।
सवर्णदीर्घे काही। काहिन्ति। "अन्नाणी किं काही, किं वा
नाही य छेयपावग" ॥

क सी ॥३।१।३८॥

काधातोर्भूतेऽर्थे सीप्रत्ययो वा स्यात्॥

भूते काकरदवखुलभहोतराणामद् ॥४।४।३४॥

एषां भूतेऽर्थेऽडागमः स्यात्। अकासी॥

को य सिद् ॥४।४।३३॥

काधातोः परस्य याप्रत्ययस्य सिडागमः स्यात्। कासिया।

---

* कणण, कड, कप्प, कर, कम, का, कास, कीर, कुड, कुन्द,
एते कणणाद्य॥

\+ का, दा, ने, ना, पा, पी, वा, भा, एते काद्य॥

---

१ अज्ञानी किं करिष्यति किं वा ज्ञास्यति च छेक पापक ( वा )।
( दस० ४-१० )॥

किलिस्स किलेस क्लिस्स क्लिस उपतापे। किलिस्सइ, किलिस्सन्ति, किलेसन्ति। परिकिलेसन्ति। क्लिस्सन्ति। "कीवा जत्थ य किस्सन्ति, नाइसंगेहि मुच्छिया"। कीर विक्षेपे। उक्कीरइ॥

वें कीरस्य किखर ॥३।१।६१॥

वे' परस्य कीरधातोः किखरादेशो वा स्यात्। विकिखरइ। विकिखरेज्जा। कुण करणे। कुणइ। कुणउ॥

कुँणादिभ्य सेरु ॥३।१।१४॥

आज्ञाया कुणादिधातुभ्यः परस्य सिप्रत्ययस्योकारोऽन्तादेशो वा स्यात्। कुणसु, कुण॥

इणयोरिज्जकुणयो ॥४।४।८२॥

कुण धातोर्णस्येज्जप्रत्ययेकारस्य च लोपः स्यात्। कुज्जा। कुण्ठ करणे। कुण्ठइ, कुण्ठन्ति। कुण्ठिज्जा। विउण्ठइ, विकुण्ठइ। कम पादविक्षेपे। कमइ, कमति। अभिनिक्खमाहि॥

१ क्लीबा यत्र च क्लिश्यन्ति ज्ञातिसङ्गैर्मूर्च्छिता। (सूत्र० १-३ २ १२)॥

*कुण, सम् अप्प, प कप्प, कह, किलम, खम, गिण्ह, चिंत, छिंद, तन, नम, जाण, जाय, इव, दल, दह, नस, पाल, प्फाल, भमाड, भास, भुंज, रम, मिलाय, मुच, लुच, वच, मुण, हण, एत कुधात्व ॥

अत्यप्यवानां च ॥४।४।८५॥

एषामादेरकारस्य लोपो बहुलं स्यात् । अवक्कमइ, वक्कमइ । अँक्कमेज्जा । निक्खमइ । निक्खमे । पडिक्कमए । पडिणिक्खमइ, पडिनिक्खमइ । परक्कमेज्जा, परक्कमिज्जा, परक्कमिज्जासि ॥

येरितोऽतेरती ॥२।२।८॥

विसर्गनिमित्त इकारादतिसंबन्धिन्यकारे परे पूर्वपरयोरीकारादेशो बहुलं स्यात् । वीइक्कमति, वीतिक्कमति । कोस आक्रोशे । अक्कोसइ । पडिकोसइ । कन्द पतने । पक्कन्दइ । खा अदने ॥

खादानां तौ ॥२।२।२६॥

खादीनां तौ परे यगागमो वा स्यात् । खायइ, खाइ । खिंस निन्दायाम् । खिसइ खिंसति, खिसन्ति । खिसइज्जा । गम गतौ । वा० (आगमनमाभ्यामित्येकारविकल्पे) आगमेइ, आगमइ । गरह गरिह निन्दायाम् । गरहइ गरहए, गरिहन्ति, गरहन्ति । गरिहामि । गरहेज्जा । गा गाने ॥

---

+ आकारस्य संयुक्ते परे ह्रस्वः ॥

---

*ग, आ वा उम, ऋ ि ा, त, दि न, द्दा, दिला, प दिला, सा , ण्णे म्ना ॥

गादीनामिज्जे ॥४।४।१४॥

गादीनामिज्जे परे यगागम+ स्यात् । गाण्ज्जा । गिज्झ आशक्तौ । गिज्झइ । वा० (गिज्झादौ च वक्तव्य.) । गिज्झा । गिज्झे । गिज्झेज्जा । गुर उद्यमने ॥

अवादपस्यादेर्लोपोऽनुस्वारश्च गुरे ॥४।४।३५॥

अवोपसर्गात्परस्यापोपसर्गस्यादेर्लोपोऽनुस्वारश्च स्तो गुरधातौ परे । अवपगुरे । ग्घा गन्धोपादाने ॥

ग्घो जिग्घ ॥३।१।९२॥

ग्घाधातोर्जिग्घादेश स्यात्यादौ प्रत्यये । जिग्घइ ॥

आतो ग्घ आदे. ॥४।४।८३॥

आकारोपसर्गात्परस्य ग्घाधातोरादेर्लोपो वा स्यात् । त्यादिस्वायकारागमनिरूपे, आघाएइ अग्घायइ अग्घाइ, आघायन्ति, अग्घायन्ति ॥

आग्घाक्षिययोर्हे॥४।४।१५॥

आगोर्हे परे यगागम स्यात् । आग्घायए । चर गतौ । चरइ । आयरन्ति । णिचरइ । पयरइ । पडिचरति । पडियरइ । वियरए । वियरइ । समायरइ । समायरे । समायरिंसु । चिगिच्छ चिकित्सायाम् । चिगिच्छइ ॥

चिगिच्छस्यादेस्त ॥३।१।६४॥

चिगिच्छधातोरादेस्तकारादेशो वा स्यात् । वितिगिच्छइ । वितिगिच्छामि । चिण चयने । चिणइ ॥

---

+ गा,गुम, प ना, पडि निर् जा, क्षिया,उत दाय, परि दन, निर् झा, पडि-सम आ, ण, ना, हा, एते गादय ॥

### वा न्तौ ॥३।१।६७॥

चिणधातोरिणस्यायादेशो वा न्तिपरे। चयन्ति, चिणन्ति। चिणन्तु। चिणिन्तु। उवचिणइ, उवचिणन्ति। उवःचिणिस्सन्ति ॥

### समोहेरुस् ॥३।१।९८॥

संपूर्वकस्य चिणधातोः सम्बन्धिनो हेरुसादेशो वा स्यात्। आदिस्वरलोपे, सचिणु। जप व्यक्तायां वाचि। जंपइ। जपइ ॥

### न्तौ जंपस्य ॥३।१।८५॥

जपस्योपधाया द्वित्वं वा स्यात् न्तिप्रत्यये। जप्पन्ति,जपन्ति। जंभ गात्रविस्तारयो। वियभइ। जत प्रयत्ने। जयइ। जये। कृणादित्वात्, जयन्तु। जहा त्यागे ॥

### जहास्तिमाणणिज्जेषु ॥१।३।८१॥

जहाधातोरन्त्यस्य ह्रस्वो वा स्यात् ति-माण णिज्जप्रत्ययेषु। जहइ जहाइ, जहति जहाति। जहासि। पूर्वस्वरलोपे, निजहिज्जा। विप्पजहति, विप्पजहाति। विप्पजहामि। विप्पजहे। जा गतौ प्रादुर्भावे च। जाइ ॥

### जादीना तो ॥४।४।१६॥

जादिगणपठितानां यगागमः स्यात्तिप्रत्यये परे। जायइ*। संयोगे परे ह्रस्वे, जन्ति। जायइ। अभिजायइ ॥

---

* प्रादुर्भावे जा, अभि-जा, सम्-जा, म्ला, आ-ग्ला, गा, वा, हा, आ-हा, ध्मे जाय ॥

## जो हे ॥३।१।२६॥

जाधातोः परस्य हिप्रत्ययस्येट् न स्यात् । अभिजाहिति ॥

## उदापेभ्यो ज ॥४।४।८४॥

उद् आ पेभ्यः परस्य जाधातोरुपधाया लोपो वा स्यात् । उदाइ । णिज्झानि । उत्यादित्वात्, णिज्झायन्ति, णिज्झन्ति । णिज्झामि । णिज्झाउ । णिज्झाहिन्ति । णिज्झाइस्सामि । णिज्झाइ । णिज्झन्तु । णिज्झाइस्सामि । पज्झाण्ज्झामि, पज्झाण्ज्झासि । पज्झामि, पयामि ॥

## ज स्सस्यैट् ॥४।४।३६॥

जाधातोः परस्य स्सप्रत्ययस्यैडागमः स्यात् । इडोऽपवाद । पजाइस्सामि । पचायाइ, पचायन्ति । पचायाहिति, पचायाइस्सइ, पचायाइस्सन्ति । जाण अवबोधने ॥

## जाणादीनां दीर्घो वा तौ ॥३।१।६६॥

जाणादिधातूनामन्त्यस्य दीर्घो वा तिप्रत्यये परे । जाणाइ, जाणइ ॥

## जाणस्यादेर्य ॥१।४।६६॥

जाणस्यादेर्यकारो वा स्यात् । याणइ, जाणन्ति, याणन्ति । जाणामि, याणामि, जाणे । परियाणाइ, परियाणइ, परियाणन्ति । परियाणइ । वियाणाइ ॥

---

× जाण, किण, जग, निग, ल, घुण, लिह, पीम, एते जाणादय ॥

## जाणहणाभ्यां वा ॥३।१।१२॥

जाणधातोर्हणधातोश्च प्रवर्त्तनायां याप्रत्ययो वा स्यात् । निआणिया, विजाणिया, विजाणिज्जा, विजाणेज्जा । कुणादित्वात्, निपाणसु, विणाणाहि । जूह मिश्रणे । निज्जूहन्ति । जोय दर्शने । जोयइ । ज्झा झिया ध्याने । झायइ, झाअइ, झायन्ति ॥

## ज्झादलयोरिज्जे ॥४।४।२७॥

अनयोरिज्जप्रत्यये यगागमो वा स्यात् । झाएज्ज, झाइज्जे । झियायइ, झियाइ, झियायन्ति ॥

## झियः सौ ॥४।४।१७॥

झियाधातोः सिप्रत्यये यगागमः स्यात् । झियायसि । झियामि । झियाए, झियाएज्जा । झियाहि, झियायइ । डंस दशने ॥

## डंसस्य तौ ॥४।४।८७॥

डसधातोरनुस्वारस्य लोपः स्यात्तौ परे । डसइ । विडसइ । डी विहायसागतौ ॥

## उदो डियो डास्त्यातयो ॥३।१।८६॥

उदः परस्य डीधातोर्डा इत्यादेशः स्यात्तिप्रत्ययात्प्रत्ययोः । उड्डाइ । दा विदारणे । आदाइ, आदाति, सादायन्ति, आदन्ति । आदाहि, आदाह । णुल्ल प्रेरणे ॥

पंकप्पपणुल्लाभिधाराणा मवि ॥४।४।१८॥

एषा मोप्रत्यये परे पगागमः स्यात् । पणुल्लयामो । पणुल्लिज्जा । तर तरणे सामर्थ्ये च । तरइ, तरन्ति । तरसि । तरे । तरिस्सन्ति, तरिहिन्ति । अतरिंसु । उत्तरइ उत्तरेइ, उत्तरिन्ति, उत्तरन्ति । उत्तरह, उत्तरए । तकारस्य पकारे, ओयरइ । वियरइ, वितरन्ति । वियरिज्जा, वियरेज्जा । वियरिज्जइ । तिप्प दुःखदाने तर्पणे तृप्तौ च । जाणादित्वात्, तिप्पाइ, तिप्पइ, तिप्पन्ति । तिप्पामि । तुर तूर त्वराधाम् । तुरन्ति । तूरन्ति । अभितूर । तुस संतोषे । तुसइ । सतुसइ ॥

समस्तुसस्यैति ॥३।१।६८॥

सम परस्य तुसधातोरुपधाया हित्व स्यादेप्रत्यये परे । सतुस्से । त्तस उद्वेगे । परिवित्तसिज्जा ॥

त्तसस्यैरयो ॥३।१।६६॥

सपूर्वकस्य त्तसधातोरुपधाया द्वित्वं स्यादेप्रत्यये तिप्रत्यये च परे । सतस्सइ । सतस्से । त्थुण स्तुतौ । सथुणइ ॥

इज्जे च समः ॥४।२।४१॥

सम परस्य त्थुणधातोस्थआदेशः स्यादिज्जे चकारादणवेषु परेषु । सथणेज्जा । दल दाने । जाणादित्वाद्वा दीर्घ, दलाइ, दलइ, दलयन्ति ॥

दलपारपुजानां मो ॥४।४।१६॥

एषां मिप्रत्यये परे यागमः स्यात् । दलयामि ॥

दलस्य हिमवोः ॥४।४।२८॥

दलधातोर्यगागमो वा स्याद्धिमोप्रत्यययोः। दलयामो, दलामो । दले, दलेज्जा, दलज्जा । कृणादित्वात्, दलसु । विकल्पेन यागमे, दलयाहि, दलाहि ॥

दलस्य हे ॥१।३।८४॥

अस्य दीर्घोऽन्तादेशो वा हप्रत्यये । दलाह, दलह । दलइस्सइ । दलइस्सामि । दह धारणे ॥

आतो दहस्य ढः ॥१।४।६७॥

आतः परस्य दहधातोर्डकारादेशः स्यात् । आढहइ, आढहन्ति । सद्दहइ, सद्दहाइ, सद्दहन्ति, सद्दहन्ति । सद्दहे, सद्दहेज्ज । सद्दहसु । सद्दहिस्सइ । दिप्प दीप्तौ । पदिप्पण । दिस प्रेक्षणे दाने च ॥

एमाणयोर्दिसस्य प्रेक्षणे ॥१।३।२५॥

प्रेक्षणार्थे दिसधातोरिकारस्य वृद्धिः स्यादेमाणयोः परयोः ॥

एति दिसस्य हे ॥१।४।१२३॥

[illegible] स्यादेप्रत्यये

दक्खु सेसोर्दिसस्य ॥३।१।१०३॥

प्रेक्षणार्थकदिसधातोरिसुप्रत्ययसहितस्य दक्खुर्निपात्य॰ते। अदक्खु ॥

सस्सहेर्दच्छि ॥३।१।१०४॥

प्रेक्षणार्थकदिसधातोः स्सप्रत्ययसहितस्य दच्छिर्निं॰पात्यते। दच्छिसि। दुस वैकृत्ये अप्रीतौ च ॥

न्तौ पात् ॥३।१।७१॥

पोपसर्गात्परस्य दुसधातोरुपधाया द्वित्वं स्यात् न्तौ परे। पदुस्सन्ति। दू गतौ परितापे च। अय गतौ स्यार्थे इञप्रत्ययान्तः। दूरञ्जइ। देव विलापे॥

देवादिभ्यस्ते ॥३।१।१००॥

देवादिधातुभ्यः परस्य तिप्रत्ययस्य दीर्घो वा स्यात्। परि॰देवती। परिदेवए। परिदेवइ। परिदेवञ्ञा। दा पलायने। उद्दाइ। गिलादित्वात्, उद्दायन्ति। णिद्दाञ्ञ। निद्दाञ्ञ। धाव शीघ्रगतौ। पधावइ। पधावए। परिधावन्ति। अयादि॰त्वात्, परिधाविज्ञा। घुण कम्पने। जाणादित्वात्, घुणाइ, घुणइ, घुणन्ति। घुणे। निद्दुणे। नद अव्यक्ते शब्दे। णदइ। नदइ, णदन्ति। नम नम्रीभावे॥

* दस, अस, देह, मआ, मोय, एत देवाग्य।

आगमनसाभ्यां तौ ॥३।१।१०८॥

आभ्यामेप्रत्ययो वा स्यात्तिप्रत्यये परे। णमइ, णमेइ, नमन्ति ॥

नमादेरिर्मोवि+ ॥३।१।१११॥

नमादिधातोरन्त्यस्यैकारादेशः स्यात् मोप्रत्यये। नमिमो। नमह। उवणमन्ति। उवणमन्ति। पणमइ, पणमेइ,। पणमिमो। पणमह। पच्चुण्णमति। पच्चुन्नमति। परिणमेइ, परिणमइ, परिणमन्ति। परिणमेज्जा, परिणमिज्जा। परिणमिस्सन्ति ॥

विप्पाभ्या नमस्य वो न्तौ ॥१।४।१२५॥

विप्पोपसर्गपूर्वकस्य नमधातोरुपधाया वः स्यात् न्तिप्रत्यये परे। विप्पणवन्ति। नमस नमस्कारे। णमसइ, नमसइ, णमसति। णमंसामि, नमसामि, णमसामो, नमसामो। णमसिज्जा, णमंसेज्जा। णमसह। णमसिस्सिति। णमसिहामि। नस्स नाशे ॥

न्तीज्जयो पविप्पाभ्याम् ॥१।२।३०॥

आभ्यां परस्य नस्सधातोः सयुक्तस्यादेर्लोपः स्यात् न्तिइज्जपरयोः। पणसन्ति। विप्पणस्सेज्जा। ने प्रापणे ॥

एदोऽभ्यासिज्जस्येत ॥४।४।८६॥

एकारान्तादोकारान्ताच्च धातोः परस्येज्जप्रत्ययस्यैकारस्य

---

+ नम, रुच, नन, मख, मर, रच, सुण, हर, एते नमाद्य ।

लापो भवति । णेज्जाहि । अवणेज्जा । अवणेट । आणेमि ॥

हिन्तयोर्नेरत् ॥३।१।११२॥

हिन्तपरयोर्नेधातोरकारान्तादेशो वा स्यात् । आणाहि, आणेहि, आणेइ । एकारस्य वैकल्पिक इकारादेशे, उवणिन्ति, उवणेन्ति । उवणेहि, उवणाहि, उवणेट । उवणेहिन्ति । णीणेइ, णीणेति । परिणेहि ॥

पवेस्तौ ॥३।१।११३॥

पविपूर्वकस्य नेधातोरन्त्यस्याकारो वा स्यात्तौ परे ॥

पान्नायि वे ॥१।३।८६॥

पात्परस्य वेरुपसर्गस्य दीर्घाऽन्तादेशो वा स्यात् नेधातौ परे । पवीणेइ, पविणइ, पविणेइ ॥

अयोऽणेन्तीज्जहतारेसु ॥३।१।११४॥

नेधातोरन्त्यस्यायादेशो वा भवति अ-ए-ए न्ति इज्ज-ह तारप्रत्ययेषु परेषु । जिणयन्ति । विणएज्ज । विणाएइ । समाणेन्ति । समाणेहिइ । सपज्जोणेमो । ण्हा स्नाने । यकारागमो वा, ण्हायइ, ण्हाइ, ण्हाति, ण्हायन्ति । पज्ज गतौ ॥

पज्जादीनां पो व ॥१।४।१३॥

एषां धातूनामनादिभूतामयुक्तपकारस्य वकारो वा

* पज्ज, पड, पिव, पाल, पय, एत पज्जादय ॥

स्यात् । आवज्जइ । आवज्जे । उप्पज्जइ । उप्पज्जए । उप्पज्जन्ति । उप्पज्जिस्सन्ति । उप्पज्जिस्सं । उप्पज्जिसु । उवसपज्जइ । णिप्फज्जइ, निप्फज्जइ, । निप्फज्जए । पडिवज्जइ । स्वार्थे इज्ज:, पडिवज्जिज्जइ । पडिवज्जाहि । पडिवज्जिहिति । पडिवज्जिस्सामि । समुप्पज्जइ । अयादित्वात्, समुप्पज्जित्था । समुप्पज्जिसु । पड पतने । पडइ, पडन्ति । अहिवडन्ति ॥

उपसर्गात्पडस्य य. ॥३।४।१२६॥

उपसर्गात्परस्य पडधातोरुपधाया यकारो बहुल स्यात् । उप्पयइ, उप्पअइ, उप्पयन्ति । उप्पएज्जा । उप्पयाहि । उवयइ, उवयन्ति । ओवयन्ति । णिवडइ । निवडइ, निवयन्ति । निवडन्ति । पडियावयन्ति । पडियावएज्जा । पवोवयइ । सपडइ । सपयन्ति । पा पाने ॥

आज्ञावर्त्तमानणिज्जेषु पिवपियौ पः ॥३।१।१०१॥

आज्ञावर्त्तमानार्थकप्रत्यययोः परयोर्णिज्जे च पाधातोः पिवपियावादेशौ पर्यायेण स्याताम् । पिवइ, पियइ, पियन्ति । पियसि । पिआमो ॥

प्रवर्त्तनायां वा ॥३।१।१०२॥

प्रवर्त्तनार्थे पाधातोरुक्तावादेशौ वा स्याताम् । पिवे, पिए । पाइज्जा । पियइ । आविअइ । आविए । पुच्छ प्रश्ने । पुच्छइ । पुच्छए । पुच्छन्ति । पुच्छसि । पुच्छामो । पुच्छिज्ज, पुच्छिज्जा । पुच्छ । पुच्छिस्सामि, पुच्छिस्सं, पुच्छिस्सामो ॥

पुच्छादेर्वा ॥३।१।२६॥

पुच्छधातोरम्प्रत्ययो वा भूतेऽर्थे । पुच्छिसु । पुच्छे । आपुच्छइ ।

पडिपुच्छइ, पडिपुच्छन्ति। पडिपुच्छउ। पूज पूजायाम्।
पुयइ, पुयन्ति। पुअयामि। फुट्ट स्फुटने। फुट्टइ॥

फुट्टस्य टयोर्डस्त्वान्तहिप्रेरणासु ॥३।१।११५॥

फुट्टधातोष्टकारयोर्डकारादेशः स्यात् त्वा न्त हिप्रत्ययेषु परेषु प्रेरणार्थे च। फुड्डिरे। फुस स्पर्शे शुद्धौ च। फुसइ, फुसन्ति। फुसिज्ज। फुसन्तु। सफुसिज्जा। वध बन्धने। बधइ, बधन्ति। बधेज्जा॥

वधरुंभहिडेभ्यो हेरेट् ॥१।१।३७॥

बन्धादिधातुभ्य परस्य हिप्रत्ययस्यैडागम स्यात्। इटोऽप्, वाद। बधेहिन्ति, बधिस्सन्ति॥

वधादी ॥३।१।२०॥

बन्धधातोरीप्रत्ययो वा स्याद् भूतेऽर्थे। बधी। बन्धे इत्सु, बंधिसु। बीह भये॥

बीहस्य भायभीयो तयि ॥३।१।११६॥

बीहधातोर्भाय भीय इत्येतावादेशौ त्सत्ते परे। भायण। भीयण। भय सेवायाम्। भयइ, भयण, भयज्ज। विभयन्ति। विभण। भण कथने। भणइ। नमादित्वात्, भणिमो, भणिहामि। भम भ्रमणे। भमइ। भमिंशी। भमिहिन्ति। उब्भमन्ति। भव सत्तायाम्। भवइ, भवति, भवन्ति। भवन्ति, भवइ। भवामि, भवामो। भवेज्जामि, भवेज्जाइ, भवेज्जामि।

भवे, भवेज्जा। भवउ, भवतु, भवन्तु। भव। भविस्सइ, भविस्सन्ति। भविस्सह। भविस्सामि, भविस्स, भविस्सामो॥

भवस्य भुवीभुविमौ ॥३।१।४१॥

भवधातोर्भूतेऽर्थे भुवी भुवि इति वा निपात्येते। भुवि, भुवी। पक्षे इसुप्रत्यये,

भवस्येसावद् ॥४।४।४६॥

भवधातोरिसुप्रत्यये परेऽडागमः स्यात्। अभविसु। पाउर्पूर्वकस्य अयादित्वात्, पाउब्भविन्था। भा दीप्तौ। भाइ। भाउ। पडिहाइ। भिद् विदारणे। भिन्दइ, भिन्दन्ति। भिन्दे, भिन्दिज्जा, भिन्देज्जा। भिन्द। भिन्दिहिति॥

आतो भिदस्यादेरेति ङि ॥३।१।१२१॥

आकारोपसर्गात्परस्य भिन्दधातोरादेर्ङित्वस्यादेप्रत्यये। अब्भे। भुज भक्षणे भोगे च। भुंजइ, भुजए, भुजन्ति। भुजामो। भुजे, भुजिज्ज, भुजेज्ज, भुजेज्जा। कुणादित्वात्, भुजसु, भुजाहि, भुज, भुजह॥

भुंजात्खड् ॥३।१।१७॥

अस्माद्धातोः खड्प्रत्ययः स्याद् भविष्यदर्थे स्यादौ परे॥

खडि भुजस्य ॥१।३।२६॥

भुजधातोरुकारस्य वृद्धिः खडि परे। भोक्खामि। स-युक्ते परे ह्रस्वविकल्पे, भुक्खामो, भोक्खामो। उवभुजइ। उवभुजसि। परिभुजइ। सभुजेज्जा। मन्न अवबोधने। मन्नइ। मन्नए। मण्णइ, मन्नन्ति। मन्नसि॥

मन्नान्मेरेस् वा ॥३।१।१२३॥

मन्नधातो परस्य मिप्रत्ययस्यैसादेशो वा स्यात्। मन्ने, मन्नामि, मण्णामि, मरणो। मण्णेज्ज। कुणादित्वात्, अणुमन्नसु, अयादित्वात्, अणुमन्नित्था। मर प्राणत्यागे। मरइ मरए। मरन्ति। मरसि। मरिस्सन्ति। मा माने। माणआ। माहिइ। माद् प्रमादे। प्रवर्त्तनायामेप्रत्यये प्रकृतिभावे, पमायए। मिल सगमे॥

मिलस्य ये ॥१।३।८५॥

मिलधातोर्दीर्घोऽन्तादेश स्याद् यकारे परे। मिलायन्ति। मिलन्ति। मुच्छ मूर्च्छायाम्। मुच्छइ। मुच्छिज्जा॥

समो मुच्छे न्तिमयो ॥४।४।९०॥

समो मकारस्य लोपो वा स्यान्मुच्छधातौ न्तिमपरके। समुच्छन्ति, समुच्छन्ति। रभ आरम्भे। आरभइ। आरभे। समारभइ, समारभति॥

न्ते समारभात् ॥ ३।१।१२४॥

सम्आपूर्वकस्य रभधातोः परस्य न्तिप्रत्ययस्यैसादेशो वा स्यात् ॥

समारभस्यैसेत्तासु ॥४।४।८८॥

रभधातोरनुस्वारस्य लोप. स्यादेम् ए-त्ताप्रत्ययेषु। समारभे, समारभन्ति। "माइणो कट्टु माया य, कामभोगे समारभे"[१] ॥

---

१ मायानिन कृत्वा माया च, कामभोगान् समारभन्ते।(सूय० १ ८ ५)।

रंभरक्खवहणहरेसु सम सा ॥३।१।१२५॥

एषु परेषु समः सादेशो वा स्यात्। सारभइ, समारंभइ। रक्ख रक्षायाम्। रक्खेज्ज। रक्ख, रक्खाहि। सारक्खइ, सरक्खए, सारक्खन्ति, सरक्खन्ति। सारक्खामि, सरक्खामि। सारक्खाहि, संरक्खाहि। रिय गतौ ॥

रियस्येतो दीर्घः ॥३।१।१२०॥

रियधातोरिकारस्य दीर्घो वा स्यात्त्यादौ परे। रीयइ, रियइ रीएज्जा, रीइत्था। रुभ आवरणे। रुभइ। णिरुभइ, णिरुभन्ति। वन्धादित्वात्, णिरुभेहिति ॥

रुभस्येज्जे ॥३।१।७३॥

रुभधातोरुपधाया इत्त्व स्यादिज्जप्रत्यये ॥

इज्जयोर्भस्य झो रुभस्य ॥३।१।१२६॥

रुभधातोर्भस्य झकारादेशः स्यादिज्जङप्रत्यययोः। विरुज्झेज्जा। रुद् अश्रुविमोचने ॥

रुदस्यान्ततिन्तिहिमाणेषु ॥१।३।२७॥

रुदधातोरुकारस्य वृद्धिर्वा स्यात् अन्त-ति-न्ति-हि-माणेषु परेषु। रोयइ, रुयइ। रोयन्ति, रुयन्ति। रुय।

दो व. ॥१।३।२८॥

रुदधातोर्दकारस्य वकारो वा स्यात्त्यादौ। रुवे। रोव। लभ प्राप्तौ। लभइ, लहइ, लहए, लहन्ति। लहसि। लभामि। लहे लभिज्जा, लभेज्जा। लहन्तु। लहह। लभिहिति। लभिस्सामि ॥

## लभाद्धस्य लङ् ॥३।१।१८॥

भविष्यदर्थे लभधातोः परस्य ह्मप्रत्ययस्य लङादेशः स्यात्। लङ्घिन्ति॥

## लभादिण् ॥३।१।४२॥

भूतेऽर्थे लभधातोरिण्प्रत्ययः स्यात्। अडागमः, अलाहि॥

## आदुपोवेभ्यो लभस्यानुस्वारोऽतिसित्ताणमाणेषु ॥ ४।४।३८॥

आ उप उवोपसर्गेभ्यः परस्य लभधातोर्लकारस्यानुस्वारागमो वा स्याद् अ ति सि त्ता ण-माणेषु परेषु। उवालम्भति। उपलम्भसि। आदुपावेभ्य इति किम्, पडिलभामि। पडिलभे। लव व्यक्तायां वाचि। लविज्ञा, लवे। आलवइ, उल्लवइ। लुण छेदने। लुणन्ति॥

## लुणस्येज्ञे य ॥४।४।२७॥

लुणधातोरुपधाया यकारः स्यादिज्ञे परे। लुण्ज्ञा॥ वच व्यक्तायां वाचि॥

## वचाच्छद्खडौ भविष्यति ॥३।१।१२७॥

भविष्यदर्थे वचधातोश्छह्प्रत्ययः खङ्प्रत्ययश्च स्यात्पादौ परे।

## ओदादेरतश्छडि ॥३।१।१२८॥

छडिपरे वचधातोरादेरकारस्योकारः स्यात्। संयुक्ते ह्रस्वविकल्पे, वुच्छामि, वोच्छामि, वुच्छ, वोच्छ। वक्खति। वक्खामो॥

पवोच्छाद्धिस्त्यादौ ॥३।१।१२६॥

पात्परस्माच्छद्रूप्रत्ययान्ताछ्वधातोर्हिप्रत्ययः स्यात्त्यादौ परे। पवोच्छिहिङ। लुभ लोभे॥

लुभस्य तित्तयो. ॥३।१।७४॥

अस्योपधाया ह्रित्व स्यात्तित्तप्रत्ययपोः परयोः। लुब्भइ। वह प्रापणे पीडायां च॥

वहस्येहो झो ह्रिश्च ॥१।४।१२८॥

वहधातोरुपधाया अकारादेशो ह्रित्वं च स्यादिहौ परे॥

इहो वहस्य ॥३।१।१३०॥

वहधातोरिकारस्याकारः स्यादिहौ परे। वोज्झहिन्ति। वा वायुसंचरणे॥

वे स्सस्य ॥३।१।२३॥

वाधातोः परस्य स्सप्रत्ययस्येडागमः स्यात्। अनिट्त्वादप्राप्तौ वचनम्, परिनिव्वाइस्सन्ति। विध ताडने॥

विधस्य न्तित्यो ॥१।४।१३१॥

विधधातोरुपधाया अकारो ह्रित्व च वा स्यात्तिन्तिप्रत्ययोः परयोः। विज्झइ, विंधइ, विज्झन्ति। व्यय गतौ॥

व्ययस्य चस्त्यादौ ॥१।४।१३२॥

व्ययधातोरुपधायाश्चकारो ह्रित्व च वा स्यात्त्यादौ परे॥ वच्चइ, वयइ, वइ, वच्चन्ति। ममादित्वात्, वच्चिमो, वयामो॥

ण, वण्ज्ञ । वचउ । कुणादित्वात् ,वचसु, वच, वयाहि,
यह ॥

अण्वतिभ्या व्वयस्य ॥४।४।६१॥

अणुअतिभ्या परस्य व्वयधातोरादेर्वकारस्य लोप' स्या-
त् । सयुक्तस्यादित्वाभावादप्राप्ते लोपे वचनम्, अणुवयामो ।
मतिवयन्ति । अण्वतिभ्यामिति किम्, अणुपव्वयति, पव्व-
यामि। पव्वएज्जा । पव्वयइ । पव्वइहिति। पव्वइहिसि,पव्वइ-
स्ससि । पव्वइस्सामि, पव्वइस्सामो ॥

परेर्वा ॥४।४।६२॥

परिपूर्वकस्य व्वयधातोरादेर्वकारस्य लोपो वा स्यात् ।
अप्राप्तविभाषेयम् । परिव्वए, परिव्वएज्जासि । वीइवयइ,
वीइवयति, वीतिवयति, वीइवयन्ति, वीतिवयन्ति । वीइव-
यामि । वीइवएज्जा, विइवयेज्जा । वीइवयइ । वीइवइस्सइ,
वीइवइस्सन्ति । सुपरिवएज्जा । स अवसाने । ववससि,

व्यवाभ्या सस्येति ॥३।१।१२२॥

भ्याभ्या परस्य सधातोरुपधाया द्वित्व स्यादेकारे पर ।
ववस्से । सद् आस्वादने ॥

सद्स्यास्वादे दयोस्तौ य ॥१।४।६८॥

अस्य धातोर्दकारयोर्यकार, स्यादास्वादेऽर्थे तौ परे ।
मयइ । सइए । सय शयने । सयइ, सयन्ति । सए । स
एहि, सइस्सामो । सास अनुशासने । अणुमासए । अणु-
मासन्ति । अणुमासति ॥

सासस्य मो ॥४।४।४०॥

सासधातोरन्त्यस्यानुस्वारागमः स्यान्मिप्रत्यये परे । दीर्घस्यापवादः । अणुसासमि । सिण सेवायाम् । अयं धातुः समुत्पूर्वक एव दृश्यते ॥

उत् सिणस्य मो ॥१।३।८८॥

सिणधातोरन्त्यस्योकारो वा स्यात् मिप्रत्यये परे । पक्षे दीर्घः । समुस्सिणोमि, समुस्सिणामि । सिर विसर्गे। णिसिरइ, णिसिरन्ति। णिसिरामि, णिसिरामो। निसिरइ। निसिरे ॥

इज्जे सिरस्य सो विउभ्याम् ॥३।१।१३२॥

विउभ्या परस्य सिरधातोः सादेशः स्यादिज्जप्रत्यये परे। विउसिरे, विउसेज्ज । सिव्व तन्तुसन्ताने ॥

सिव्वस्य स्से सीव- ॥३।१।१३४॥

सिव्वधातोः सीवादेशो वा स्यात् स्सप्रत्यये। सीविस्सामि, सिव्विस्सामि । सीय विशरणे । सीयइ, सीयति। अवसीयइ । णिसीयइ, णिसीयन्ति ॥

ह्रस्वो णे सीयस्य न्ति- मो- माणेषु ॥३।१।१३५॥

णेरुपसर्गात्परस्य सीयधातोरीकारस्य ह्रस्वो वा स्यात् न्ति-मो- माणप्रत्ययेषु । णिसियन्ति। णिसीयामो, णिसियामो। णिसीयह । निसीयइ, निसीयन्ति ॥

न्तीज्जयोर्वज्जः ॥३।१।१३६॥

निपूर्वकसीयधातोर्वज्जादेशो भवति न्तिप्रत्ययेज्जप्रत्यययोः।

नियच्छन्ति। निसीए, निसीइज्ज, निसीएज्ज। नियच्छेज्जा। निसीइस्सामो। विसीयइ। सुड निन्दायाम्। स्वार्थ इज्जे, सुडिज्जइ। सुय शयने॥

सुयस्य वास्तितयो ॥१।४।१३३॥

सुयधातोरूपधाया वो वा स्यात् तिप्रत्यये ते च। सुवइ, सुयइ। सुस्सुस सेवायाम्॥

उत सुस्सुसस्यान्त्यस्य ॥१।३।८७॥

सुस्सुसधातोरन्त्यस्योकारस्य दीर्घो वा स्यात्। सुस्सूसइ, सुस्सूसए। सुस्सुसइ, सुस्सुसए। सोय शोके। सोयइ, सोयन्ति। सोयामि। सोइज्ज। स्सम परिश्रमे। समइ। वीसमइ, वीसमति। वीसमए, वीसमन्ति। वीसमेज्ज। वीसमउ, वीसमह। स्सय सेवायाम्। दीर्घात्परत्वात्संयुक्तादि लोपे, आसयइ, आसयति। उवस्सए। पलिस्सएज्जा। स्सस प्राणने। ऊससन्ति। नीससन्ति। वीससइ। वीससे। हद मरणे। हदि। हदइ। हण हिंसायाम्। हणइ। हणसि। हणिज्जासि। हणामि। हणिया, हणे। हणेज्जा। हणह। निहणिंसु। पहणइ। पहण, पहणाहि। पडिहणइ, पडिहणानि

वेर्हणस्य तीज्जयो ॥३।१।७५॥

वेरुपसर्गात्परस्य हणधातोरुपधाया इत्वं स्यात्तिप्रत्यय इज्जप्रत्यये च परे। विहणइ। विहणिज्जा। समोहणइ समोहणिंहिति। साहणन्ति, साहणेज्ज। हिण्ड गत्यां हिण्डन्ति।

आहिण्डइ। आहिंडमि। आहिंडेह, आहिंडह। हो सत्ता-
याम्। होइ, होन्ति हुन्ति। ओकारान्तत्वादिकारलोपः, होज्ज,
होज्जा, हुज्ज, हुज्जा। हुज्जामि। होउ। होहि। अनिट्त्वात्,
होहिइ, होहिन्ति॥

हो स्सस्य च्छ ॥३।१।१३७॥

होधातोः परस्य स्सप्रत्ययस्य च्छः स्यात्। होच्छामि।

होऽडिसि ॥३।१।१४३॥

भूतेऽर्थे होधातोडिसिप्रत्ययः स्यात्। अहेसि, हुत्था,
होत्था। अणुहोइ, अणुहुन्ति, अणुहोंति। अणुहोहि, अणु-
होह। अणुहोहिइ॥

पाद्धोर्हुप्प- ॥४।४।४१॥

पोपसर्गात्परस्य होधातोर्हुप्प इत्यादेशः स्यात्पाक्षे। पहु-
प्पइ। पहुप्पते। पहुप्पन्ति॥

॥ इति प्रथमो गच्छादिगणः॥

# अथैकारविकरणः करादिगणो द्वितीयः॥

कर करणे॥

करादिभ्य कृदाज्ञावर्त्तमानेष्वे ॥३।१।१०५॥

करादिगणपठितेभ्यो धातुभ्य एप्रत्ययः स्यात् कृत्प्रत्ययेषु
आज्ञावर्तमानार्थकत्यादिप्रत्ययेषु च परेषु। करेइ। एकार-
स्याकारादेशविकल्पे, सयुक्ते ह्रस्वविकल्पे च, करन्ति, करि-
न्ति, करेन्ति। करेसि। करेमि। करिज्जा, करेज्जा, करिज्जासि,
करेज्जासि। करिज्जामि। करेहि, करेह। करिस्सइ, करिस्सन्ति॥

भविष्यति वा ॥३।१।१०६॥

भविष्यदर्थे करादिधातोरेप्रत्ययो वा स्यात्। पक्षे इट्, करेहिन्ति, करिहिन्ति ॥

णुक्कादीनां स्यादौ ॥१।३।२६॥

णुक्कादिधातूनामादिस्वरस्य वृद्धिर्वा स्यात्स्यादौ परे। णुक्कारेन्ति। सक्कारेन्ति। करेस्ससि। करेस्सामि, करिस्सामि, करेस्स। करिस्सामो ॥

करादिस्सम् ॥३।१।३७॥

करधातोर्भूतेऽर्थे इस्सप्रत्ययो वा स्यात्। पक्षे इसुः। अकरिस्स, अकरिंसु ॥

पुदवाभ्यां न ॥३।१।११०॥

पुत् अवाभ्यां परस्मात्करधातोरेप्रत्ययो न स्यात्। अवपरइ ॥

करादापसङ्ख्य ॥३।१।१०९॥

'आपसङ्ख्य' परस्मात्करधातोरेप्रत्ययो वा स्यात्। वागरइ, वागरेइ, वागरति, वियागरन्ति। विआगरे, वियागरे, वियागरेज्जा, वियागरज्ज। वागरेहि। वागरिहिति। वागरित्था ॥

अवात्करस्य क्खड पाके ॥३।१।१३८॥

उवोपसर्गात्परस्य करधातोः क्खडादेशः स्यात्पाकेऽर्थे। उवक्खडेइ, उवक्खडिन्ति। उवक्खडिज्ज। उवक्खडेउ।

---

+ णुत्-कर, आ-नव, उ इव, उव इव, विक्-कर, नि मम, प इव, परि इव, सत् कर, एते णुक्कादयः ।

पाके किम्, उवकरेउ। पकरइ, पकरेइ, पकरन्ति, पकरेन्ति, पगरन्ति। पकरेज्जा। पकरेह। पाउकरिस्सामि। पुक्करइ, पुक्करन्ति। पुराकरन्ति। सक्कारेइ, सक्कारइ। समल्करेइ। अञ्ज व्यक्तौ॥

अभेरञ्जस्य ग. ॥१।४।१३४॥

अभेरुपसर्गात्परस्यांज धातोरुपधाया गकारादेशः स्यात्। अब्भगेइ, अब्भगन्ति, अब्भगेन्ति। अब्भगिज्ज, अब्भगेज्जा।

अञ्च पूजायाम्। अचेइ, अचेन्ति॥

अञ्चान्मोरुर्वा ॥३।१।१५३॥

अञ्चधातोः परस्य मोप्रत्ययस्योकारान्तादेशो वा स्यात्। अचेमु। नमादित्वात्, अचिमो। "अचेमु ते महाभाग! न ते किंचि न अचिमो"। आयव ससिद्धौ जये च। आयवेइ, आयवेंति। कास दीप्तौ। पयासेइ, पकासेइ। पयासेइ। किलाम ग्लानौ। किलामेइ॥

किलामस्य वो न्तिकर्मणो ॥१।४।१३६॥

किलाम धातोरुपधाया वकारादेशः स्यात् न्तिकर्मणोः। किलावन्ति। किलामेसि। गह ग्रहणे। गहेइ। निग्गहेज्जा। पडिग्गहेइ। पडिग्गहेज्जा। घात हिंसायाम्। घाएइ, घाएन्ति। घायए। उग्घाअइ। सघातइ, सघाएइ, सघायन्ति। संघाएइ। चय सामर्थ्ये। चएइ, चयन्ति॥

---

१ अचेमु ते महाभाग! न ते किंचि न अचेमु। (उत्त० १२-३४)

चयस्य क्को ये ॥१।४।१३७॥

याप्रत्यये परे चयधातोरुपधाया क्कादेशः स्यात् । असादित्यादिज्ञादिकं बाधित्वा याप्रत्यये, चक्किया । चोय प्रेरणे। चोययन्ति । पडिचोएन्ति । पडिचोएउ । पडिचोएए । च्छट सेचने । वा० (च्छटस्य च्छोडो वा वक्तव्य.) अच्छोडेइ । जोय घोतने । जोइन्ति । जोइस्सन्ति । जोउस्तु ॥

जोयस्य व्व ॥१।४।१३८॥

जोयधातोरुपधाया वकारादेशो वा स्यात् । उज्जोवेइ, उज्जोएइ, उज्जोवेन्ति । उज्झाम ज्वलने । झामेइ । झामेज्जा ॥

उज्झामस्य तौ वा लोप ॥१।४।१३९॥

वेरुपसर्गात्परस्य उज्झामधातोरुपधाया लोपो वा स्यात्तौ परे । निज्झाउ । तक्क कल्पनायाम् । तक्केइ । वियक्केइ । ताड ताल ताडने । ताडिन्ति । ताडेज्जा ॥

ताडस्य पंतावे ॥३।१।४४॥

भूतेऽर्थे ताडधातोः पतावे इति निपात्यते । पतावे । तालेइ, तालेन्ति । तालेज्जा । दा दाने । देइ, देति, देन्ति, दिन्ति ॥

एति दो ह्रस्व ॥१।३।८९॥

दाधातोर्ह्रस्वोऽन्तादेश स्यादेप्रत्यये परे । दए, देज्जा, दिज्जा । दाहिइ ॥

दो हे ह्रस्य त्थः ॥३।१।१६६॥

दाधातो परस्मात् हिप्रत्ययात्परस्य हप्रत्ययस्य त्थादेशः

स्यात् । दाहित्थ । दाह, दाहामि ॥

हेर्मो ॥१।३।६०॥

दाधातो र्हिप्रत्ययात्परस्य मोप्रत्ययस्य ह्रस्वः स्यात् । दाहामु ॥

आत इत् ॥१।३।६१॥

आकारोपसर्गात्परस्य दाधातोरिकारोऽन्तादेशो वा स्यात् । आदिअइ । आदिण्ण ॥

पाद्यच्छ ॥१।३।६२॥

प्रोपसर्गात्परस्य दाधातोर्यच्छादेशो वा स्यात् । पयच्छइ । पयच्छामि, पयच्छामो ॥

पस्योणदेज्जागाट्टिसवणासु ॥१।३।६४॥

पोपसर्गस्य दीर्घोऽन्तादेशः स्याद्गुणइज्जप्रत्ययान्तदा इप्रत्ययान्तवत्तणाप्रत्ययान्तसवधातुषु परेषु । पादेज्जा । दाल उद्घाटने विदारणे च ॥

अवाद् दालस्य तावादे ॥३।१।८८॥

अवोपसर्गात्परस्य दालधातोरादेर्द्वित्वं वा स्यात्तिप्रत्यये परे । अवद्दालेइ, अवदालेति, अवदालेइ । दीव दीप्तौ । दीविइ, दीवन्ति ॥

पादिज्जे ॥१।४।१००॥

पात्परस्य दीव धातोरादेर्लेकारादेशः स्यादिज्जप्रत्यये । पलीवेज्जा । धार धारणे । धारेइ, धारन्ति । धारए, धारिज्जा, धारेज्जा । धारिस्सइ । धारिस्सामि । अभिधारयामो । अभिधारए । पधारेइ, पधारेति ॥

धांदीना धभयोर्ह. ॥१।४।१४॥

एषां धातूनामनादिभूतासंयुक्तावयवयोर्धकारभकारयो-र्हकारादेशो वा स्यात्। पहारेज्जा ॥

एति समुद्दो धारस्य ॥१।२।६६॥

समुद्द' परस्य धारधातोराकारस्य ह्रस्व' स्यादे प्रत्यये परे। समुद्धर। स्पहारिसु। धुक्ख उद्दीपने ॥

धुक्खस्य क ॥१।४।१४०॥

धुक्खधातोरुपधाया को वा स्यात्। सधुकेइ, सधुक्खेइ, सधुक्खेति। पार कर्मसमाप्तौ। पारेइ, पारेति, पारन्ति। बु व्यक्तायां वाचि ॥

बोस्तिन्त्योराह ॥३।१।१४१॥

बुधातोराहादेशो वा स्यात्तिन्तिप्रत्यययो परयो' ॥

आहाल्लोप उदसू ॥३।१।१४२॥

आहात्परस्य तिप्रत्ययस्य लोपो न्तिप्रत्ययस्य उद् असु-इत्यादेशो स्त। वेइ, आह, विन्ति, वेन्ति। आहु, आहसु ॥

न्तावोरूव ॥३।१।१४३॥

बुधातोरुकारस्योव इत्यादेशो वा स्यात् न्तिप्रत्यये परे। बुविन्ति ॥

वोर्मो ॥३।४।२९॥

बुधातोर्मागमो वा स्यात् मिप्रत्यये परे। बुयामि, वेमि ॥

* धा, धम धार, धट, आ, माल, माग, राम, धार, एव धाम्य।

## ह्वियोर्दीर्घं ॥३।१।१४४॥

वुधातोरुकारस्य दीर्घः स्यात् ह्नि-याप्रत्यययोः परयोः । प्रवर्त्तनायामसादित्याद् याप्रत्यये, वूआ, वूया । वूहि ॥

## चोरीः ॥३।१।४५॥

वुधातोर्भूतेऽर्थे ईप्रत्ययः स्यात् । ह्स्तोरपवादः ॥

## आदेरीत्यवो ढिः ॥३।१।४६॥

वुधातोरुकारस्यावादेश आदेर्द्वित्वं च स्यादीप्रत्यये परे । अडागमे, अव्वबी । भोग प्रेक्षणे । अयमाङ्पूर्वक एव दृश्यते, आभोएइ, आहोएन्ति आभोएन्ति आहोयन्ति । आहोएहिन्ति । लोल आलोठने । उल्लोलेइ ॥

## लोलस्येज्जे ढः ॥१।४।१४१॥

लोलधातोरुपधाया ढकारो वा स्यादिज्जप्रत्यये । उल्लोढिज्ज, उल्लोलेज्ज ॥

## लोलस्य स्से ॥१।३।९७॥

लोलधातोर्ह्रस्वः स्यात्स्सप्रत्यये परे । विलुलिस्सइ । वर वरणे । वरएते । वरेमि, वरेमो । उव्वलिज्जा । स्साद आस्वादने, प्राप्तौ, सम्मतिदाने, विज्ञाने च । स्साएइज्ज । साइज्जइ । साइज्जामो । साएण, साइज्जेज्जा । साइज्जए । साइज्जिस्सामि । आसाएन्ति, आसादेइ, आसादेन्ति, आस्सादेन्ति । आसाएमि, आसाएमो । आसाएहि । आसादेस्सामो, आस्सादेस्सामो ॥

॥ इत्येकारविकरण' करादिगणो द्वितीयः ॥

———

# अथ वैकल्पिकैकारविकरणाञ्चादि-स्तृतीयगणः ॥

अच पूजायामङ्गसङ्कोचने च ।

अचादिभ्यश्च ॥३।१।१०७॥

अचादिगणपठितेभ्यो धातुभ्य एप्रत्ययो वा स्याद्भविष्यति चकारात्क्रद्वाज्ञावर्त्तमानेषु । अचेइ, अचइ । अज्ज समुपार्जने । अज्जेइ, अज्जइ ॥

समोऽज्जस्यातस्त्तेसुमाणेष्विण ॥३।१।१४५॥

सम परस्याज्जधातोरन्त्यस्याकारस्येणादेश स्यात् त्तादिसु माण प्रत्ययेषु । समज्जिणिसु । आव प्राप्तौ । पावेइ, पावइ, पाविन्ति, पावन्ति । पावेमि । पाविहिति, पावेहिं । पाविहिमि ॥

पादावस्याउणो वा ॥३।१।१४६॥

पकारोपसर्गात्परस्यावधातोराउण इत्यादेशो वा स्यात् । पाउणति, पाउणइ, पाउणन्ति । पाउणेज्ज । पाउणिहिति । सपावेइ, सपाउणन्ति । सपाउणिज्ज, सपाउणेज्ज । सपाविहिइ । सपाउणिस्सामो । इक्ख दर्शने व्यक्ताया वाचि च । परस्सरलोपे, अणुक्खिस्सामि ॥

पोत्राभ्यामिक्खस्येह ॥३।१।१४७॥

पोत्राभ्यामुपसर्गाभ्या परस्येक्ख धातोरिहादेशो वा स्यात् । अणुप्पेहन्ति । अब्भाइक्खइ, अब्भाइक्खन्ति ॥

अवाद्य ॥३।१।१४८॥

अवोपसर्गात्परस्येक्खधातोरादेर्यकारादेशो वा स्यात् । अवयक्खइ । पक्षे परसवर्णलोपे, अवक्खइ, अवयक्खन्ति । अवयक्खसि । अवयक्खए, अवक्खए । अवपेक्खइ । अवपेक्खए । उवेहइ । उवेहे । णिरिक्खइ ॥

पात्खस्य छ ॥३।१।१५०॥

पोपसर्गात्परस्येक्खधातोः खस्य छो वा स्यात् । ह्रस्वविकल्पे, पिच्छइ, पेच्छइ, पेहेइ, पेहेति, पेहइ, पेहति, पेच्छन्ति । पिच्छमि । पेच्छामि । नमादित्वात् । पेच्छिमो । पेहे ॥

आज्ञाया पेहे हस्य हो ॥३।१।१५२॥

आज्ञार्थे पपूर्वकस्येहस्य हस्य लोपः स्यात् हौ परे । पेहि, पिच्छेह । पडियाइक्खेइ । पचुवेक्खेइ । पचुवेक्खइ । पचुवेक्खह । परिक्खेइ । परिक्खए । सपेहेइ । सपेहइ । सपेहति । सपेहेसि । सपेहेमि । ईर प्रेरणे । ईरइ । ईरन्ति । उदीरन्ति । उदीरेन्ति ॥

उदीरवेदसोभेभ्य इसोरेदित ॥३।१।१६७॥

एभ्यो धातुभ्यः परस्यंसुप्रत्ययस्यैकारस्यैकारः स्यात् । उदीरेंसु । "उपधायाः" इत्यधिकारे—

पादीरस्य ह्रिस्तिकणेषु ॥३।१।६४॥

पकारोपसर्गात्परस्येरधातोरुपधाया ह्रित्व स्यात्ति-क-ण-प्रत्ययेषु परेषु । परिपिल्लइ । उस निन्दायाम् ।

आत उसस्य तौवा ॥३।१।८४॥

आकारोपसर्गात्परस्योसधातोरुपधाया ह्रित्व वा स्यात्तो

परे । आउस्सनि, आउसइ । कप्प छेदने सामर्थ्ये उत्पादने
च । कप्पइ, कप्पेइ, कप्पेन्ति । पकप्पिन्ति । पकप्पयामो ।
कह कथने । कहेइ, कहन्ति ॥

कहस्य हो ॥४।४।२०॥

कहधातोर्यगागमो वा स्यात् ए परे । कहय । कुणादि-
त्वात्, कहसु, कहाहि, । परिकहेइ, परिकहेन्ति । क्रिण
क्रयणे । किणेइ । जाणादित्वात् । किणाइ । किणे ॥

वे. क्रिण इणस्य येहयो ॥४।४।९३॥

वेरुपसर्गात्परस्मिन् क्रिणधातोरिणसमुदायस्य लोपो वा
स्याद् यप्रत्यये एकारविकरणमन्तिप्रत्यये च परे । विके ।
ग्रसा कथने । रसाइ । संयुक्ते ह्रस्वः, रसन्ति । अब्भरस्साइ ॥

आत ग्रसो घवो वा ॥३।१।१५४॥

आकारोपसर्गात्परस्य ग्रसाधातोर्घवादेशो वा स्यात् ।
आघवेइ । आघवेज्ज ॥

आघं भूते ॥३।१।१५७॥

आपूर्वकस्याधातोर्भूतेऽर्थे आघमिति निपात्यते । आघ ।
पचक्खाइ, पचक्खन्ति । पचक्खाणमि, पचक्खामि ॥

इतेज्जयोराह ॥३।१।१५८॥

आत परस्य ख्याधातोराहादेशः स्याद् इत इज्जप्रत्ययो
परयो । विआहिज्ज । खिवन प्रेरणे ॥

उन्नि क्खिवस्य वे स्से ॥४।४।१००॥

उत्निपूर्वक क्खिवधातोरिकारान्तिस्य वस्य लोप स्या-

त्स्मप्रत्यये परे। उच्छिज्जिस्सामि। निज्झिविस्सामि। खुभ सञ्चलने॥

खुभस्य तौ ॥३।१।७७॥

खुभधातोरुपधाया ह्रित्व स्यात्ता परे। खुब्भइ। खुभ-
ज्जा। गिण्ह ग्रहणे॥

गिण्हस्य स्वार्थे ॥१।३।२०॥

गिण्हधातोरिकारस्य वृद्धिर्वा स्यात् स्वार्थ स्यादौ परे।
गेण्हइ, गिण्हइ, गेण्हेइ, गिण्हेइ, गेण्हन्ति, गिण्हन्ति। गि-
ण्हामि, गेण्हामो, गिण्हामो। गिण्हे, गिण्हिज्ज, गेण्हेज्ज,
गेण्हेज्जा। गिण्ह, गिण्हाहि॥

गिण्हस्य स्सस्य केवलस्य घेच्छस्तेरिट्॥३।१।१६१॥

स्सप्रत्ययसहितस्य गिण्हधातोः केवलस्य घेच्छादेशः
स्यात्तेरिडागमः स्यात्। घेच्छिइ। केवलस्य किम्? अभिगि-
ण्हिस्सामि॥

घेच्छान्मेरीस् वा ॥३।१।१६३॥

घेच्छात्परस्य मिप्रत्ययस्येसादेशो वा स्यात्। घेच्छी,
घिच्छामि, घेच्छामि॥

घेच्छदाहवोच्छेभ्यश्च ॥४।४।७६॥

एभ्य' परस्य मेरन्त्यलोपो वा स्यात। वेच्छं। गिल
उद्गिरणे। उग्गिरेइ। अणुगिलन्ति। चल सञ्चलने। चल-
इ, चलन्ति, चलेन्ति॥

पचलज्जभाभ्यामाय स्वार्थे ॥३।१।१६४॥

पकारोपसर्गपूर्वकचलधातोर्जंभधातोश्चायप्रत्ययः स्यात् स्वार्थे । पयलायन्ति । पयलाएज्ज । चिट्ठ गतिनिवृत्तौ । चिट्ठइ, चिट्ठेइ, चिट्ठन्ति । चिट्ठामो । चिट्ठेर, चिट्ठह । अणुचिट्ठइ । उवचिट्ठइ । पडिचिट्ठइ ॥

समश्चिट्ठस्य ख ॥१।४।१२२॥

सपूर्वकस्य चिट्ठधातोरवयवा च्छकारो वा स्यादेतिमाप्रत्ययेषु परेषु । सचिक्खइ । सचिट्ठेइ, सचिट्ठइ । सचिक्खे । छिन्द छेदने ॥

अणोणतिन्तित्तातुतारेष्वेद ॥४।२।१०३॥

छिन्दभिन्दयोरिन्दस्यैद इत्यादेशो वा स्याद् अ-ण-ऊणति न्ति-त्ता तु तारप्रत्ययेषु परेषु । छेदेइ, छिन्दइ । छिन्दण । छेदिन्ति । छिन्दे, छिन्देत्ता, छिन्दित्त । छिन्द, छिन्दाहि ॥

आतश्च्छिन्दभिन्दयोरिन्दस्यायि ॥४।२।१०१॥

आपूर्वकयोरनयोरिन्दस्य लोपः स्यादेप्रत्यये परे । अच्छे । "अप्पेगे पायमब्भे अप्पेगे पायमच्छे" । उच्छिन्दसु ॥

समुदो हिन्तौ च ॥४।४।१०२॥

समुद्‌ परयोरनयोरिन्दस्य लोपः स्यात् हिन्तिपरे चकारात् एपरे । समुच्छे । समुच्छिहिन्ति । उम निवृत्तौ । उवसमन्ति ॥

---

* अप्पेगे पायमब्भे अप्पेगे पायमच्छे .... ॥ आ० सू०
१ १ २ १६ ॥

नेर्जमस्य तिन्तित्तासु ॥१।३।६३॥

नेः परस्य जमधातोर्यच्छादेशः स्यात् ति-न्ति त्तात्यप्रत्ययेषु परेषु। णियच्छइ, णियच्छन्ति। जय जिण जये। जयइ, जयति। जिणे। जिणेहि, जिणाहि। अयादित्वात्, जइत्था। पराइणइ। कुणादित्वात्, विजयत्तु। जर वयोहानौ। जरेइ॥

नेर्जराद्वा ॥३।१।१६८॥

निपूर्वकजरधातोः परस्येसुप्रत्ययस्यादेरेकारो वा। निज्जरिसु, निज्जरेसु। ठा गतिनिवृत्तौ। ठाइ। अब्भुट्ठेइ, अब्भुट्ठेन्ति। अब्भुट्ठेमि, अब्भुट्ठामो॥

ठश्च ॥१।३।६८॥

ठाधातोर्ह्रस्वोऽन्तादेशो वा स्यात्। अहिट्ठइ, अहिट्ठेइ॥

एतष्ठः ॥३।१।२७॥

ठाधातोः परस्यैप्रत्ययस्येडागमो वा स्यात्। अहिट्ठिए, अहिट्ठए। तव सन्तापे। तवेइ, तवइ, तवेन्ति, तवन्ति। तवइस्सन्ति। आयावयन्ति। आयाविज्जा। आयावेहि। ध्वंस नाशने। धंसइ॥

अभेर्डंसस्येज्जे ॥१।२।२६॥

अभेः परस्य डंसधातोरादेर्लोपः स्यादिज्जे परे। समभिधसेज्जा। घा धारणे पोषणे च। धकारस्य हकारे, निहे॥

अपेरेति धि ॥१।३।६६॥

अपेरेकारोऽन्तादेशः स्यादेविकरणमहिनिप्रत्ययान्त-

धाधातो परे। पडिधेहेड ॥

## णतिणेषु समो धो ह्रस्व ॥३।१।१६५॥

सम. परस्य धाधातोराकारस्य ह्रस्वो वा स्याद् ण ति ण-प्रत्ययेषु परेषु। पडिसधण। पडिसधाणज्जा ॥

## परेर्धस्ते ॥३।१।२४॥

परिपूर्वकधाधातो परस्य तिप्रत्ययस्येडागम. स्यात्। णवि-करणे, परिहेइ। विकरणाभावे इटि, परिहिइ। परिहिस्सामि, विहिस्सामो। सधेज्जा ॥

## समो धस्ते ॥४।२।४४॥

सम परस्माद्धाधातोर्विहितस्य तिप्रत्ययस्य णडागमो वा स्यात्। सधणाति, सधति। "हासं पिणो सधति पावधम्मे"। णविकरणे हुवे, सधिस्सामि। धोव शुद्धौ ॥

## धोवस्य य ॥१।४।१४३॥

धोवधातोर्वकारस्य यकारो वा स्याद् अ ति न्त-इज्ज ण-प्रत्ययेषु परेषु। धोयइ, धोवेइ, धोवइ, धोवन्ति। धोवेसि ॥

## णति धोवस्य ॥३।१।१६६॥

धोवधातोराकारस्य ह्रस्व स्याद्ण्प्रत्यये परे। धुवे, धावेज्जा, धोवण्जा। पहोइज्ज, पधोवण्ज। ज्ञव ज्ञापने ॥

## आतो ज्ञवस्य नित्यम् ॥१।२।२८॥

आकारात्परस्य ज्ञवधातोरादेर्लोपो नित्यम्। सयुक्त ह्रस्वस्यापवाद। आणवेइ, आणवइ। गिलादित्वात्, आण

१ ण्गमपि म च (म भ्रात्) पापधम्मान। (सूत्र० १-१४ २१)

स्यन्ति। पास दर्शने॥

### तिहिलोपमिहमाणेषु पासस्य ॥३।१।८६॥

पासधातोरुपधाया द्वित्वं वा स्यादेषु परेषु। संयुक्ते ह्रस्व परसइ, पासेइ, पासइ, पासति, पासन्ति। पस्सामि, पासामि, पासेमि, पासामो। पासए, पासेज्ज, पासेज्जा, पासेज्जासि। पासउ, पासतु। पस्स, पास, पस्सइ, पासइ। पासिहिति। पासिहिसि। पीड पील बाधायाम्। पीडाइ, पीडेइ पीडइ। पीडामि। पीडे। पीलेइ। पीलिज्जा, पीलेज्जा। आवीलेइ। आवीलए, आवीलेज्जा। उवीलेति। पवीलिज्जा। भंस अधःपतने॥

### भंसस्य केवलस्य तौ ॥३।१।८७

केवलस्य भंसधातोरुपधाया द्वित्वं वा स्यात्तौ परे। भस्सइ, भंसेइ, भंसइ। भंसेज्जा॥

### परेर्भंसस्य तौ ॥३।१।८८॥

परेरुपसर्गात्परस्य भंसधातोरुपधाया द्वित्वं स्यात्तौ परे, परिभस्सइ। भास भाषणे॥

### पाद्भासात्से ॥३।१।५१॥

पकारोपसर्गकभासधातोः परस्य सिप्रत्ययस्यैकारोऽन्तादेशो वा स्यात्। पभाससे, पभाससि। मिला म्लाने। मिलायइ, मिलाएइ, मिलाइ, मिलायन्ति, पमिलायइ, पमिलाइ, पमिलायन्ति। परिमिलायन्ति। मुच मोचने॥

मुंचस्य तिन्तिमिच्छिखणतुणेषु ॥१।३।२१॥

मुचधातोरुकारस्य वृद्धिर्वा स्यादेषु परेषु॥

मुचस्य येऽनुस्वारस्य ॥४।४।१०५॥

अस्य धातोरनुस्वारस्य लोपः स्याद् यकारे परे। मुयइ, मोण्इ, मुयति, मोण्न्ति, मोयन्ति,मुचन्ति । मुचामि, मोण्मि। मुच, मुय, कुणादित्वात्, मुचसु मुयप ॥

मुचमुणाभ्या च्छिट् तौ ॥३।१।१९॥

आभ्या भविष्यदर्थे च्छिट्प्रत्ययः स्यात् तो परे । स्सयोरपवाद. । मोच्छिइ । रज्ज रागे । रज्जइ ॥

उमिज्जयोर्जयोर्यं ॥३।२।२२॥

अस्य धातोर्जकारयोर्यकार स्यादिज्जप्रत्यये परे उमिप्रत्यये च । रइज्ज, रण्ज । रुह प्रादुर्भावे ॥

आतो रुहस्य भस्तौ ॥१।४।१२४॥

आत' परस्य रुह्धातोरुपधाया भकारो वा स्यात्तोपरे॥

आतो रुहस्य तित्ताकेषु ॥१।३।३२॥

आत परस्य रुह्धातोरुकारस्य वृद्धिर्वा ति त्ता कप्रत्ययेषु। आरभेइ, आरुभइ। आरोहइ, आरुहेइ, आरुहइ॥

दोरुहस्योतो दीर्घ ॥१।३।१००॥

दोरुपसर्गात्परस्य रुह्धातोरुकारस्य दीर्घो वा स्यात् । दुरूहइ, दुरुहइ, दुरूहेइ, दुरुहेइ, दुरूहन्ति, दुरुहन्ति। दुरूहामि, दुरुहामि । दुरूहेह, दुरुहेह ॥

## ओतस्त्तिच ॥१।४।१४५॥

ओतः परस्य रूपानोरूपयाया भकारः स्यात्तप्रत्यये चात्तिप्रत्यये। पचोरुभइ, पचोरुहेइ, पचोरुइइ, पचोरुन्ति। वृत्त वर्त्तने॥

## तस्य टो वा वत्तस्य ॥३।१।१७०॥

वत्तस्य तस्य टो वा स्यात्। वट्टइ, वत्तेइ, वत्तेति, वत्तंति, वट्टन्ति। वत्तेह। वट्टिस्सति। वत्तस्सामि, वत्तिस्सामि। वट्टिंसु। उव्वट्टेइ, उव्वत्तेइ। उव्वट्टेज्ज। उव्वट्टिस्सन्ति। उव्वट्टिंसु। उववट्टइ॥

## उपसर्गाद्वस्य यः ॥३।१।१७१॥

उपसर्गात्परस्य वत्तधातोर्वस्य यो वा स्यात्। अणुपरियट्टइ। अणुपरियट्टिज्जा। अणुपरियट्टिस्सइ। नियट्टन्ति। तुयट्टइ, तुयट्टेइ, तुयट्टन्ति, तुअट्टन्ति। तुयट्टामो। तुयट्टेज्ज, तुअट्टेज्जा। तुयट्टेह। तुयट्टिस्सामो। पयट्टेइ। पवत्तइ। पयट्टन्ति। पयट्टिंसु। पडिणियत्तट, पडिणियत्तन्ति॥

## आतस्नेसुणेपूम् ॥३।१।१७३॥

आकारोपसर्गात्परस्य वत्तधातोर्वस्योसादेशः स्यात् तईसु णप्रत्ययेषु। समाउट्टिंसु। वद व्यक्तायां वाचि। वदइ, वदति, वयइ, वयति, वदेइ, वएइ, वयन्ति। वदमि, वयसि। वयामि, वयामो। वदे वए, वइज्ज, वएज्जा। वयाहि, वदह, वयह। वदिंसिनि, वदिहिन्ति, वदेहिन्ति, वदिस्सन्ति, वदस्सन्ति। वइस्सामो॥

वदादासी ॥३।१।४७॥

वदधातोरासीप्रत्ययः स्यात्कृतेऽर्थे । वदासी, वयासी । वेद वेदने । वेदेइ, वेदेति, वेयइ, वेएइ, वेदयन्ति, वेदेन्ति, वेयन्ति । सव निर्झरणेगर्भविमोचनेच । सवइ । अभिणिस्सवइ, अभिणिस्सवेन्ति ॥

आपाभ्या सवस्य ण्हो निज्झरणे वा ॥३।१।१७५॥

आभ्या परस्य सवधातो ण्हादेशो वा स्यात्स्यादौ परे निज्झरणेऽर्थे । अण्हाति । ऊसवेइ । उस्सवेइ । ऊसवेइ । पसवइ । पसवन्ति । पसवामि । पज्झोसवेइ । साह कथने सावने सहगमने शासने च । साहेइ, साहइ, साहति, साहयति, साहयइ । साहे, साहए, साहिआ, साहिआसि । साहिस्स॥

साहहदाभ्या डिस् ॥३।१।१५॥

आज्ञाया साहहदधात्वो. परस्य सिप्रत्ययस्य डिमादेशः स्यात् । पसाहि । सुण श्रवणे । सुणेइ, सुणेति, सुणइ, सुणन्ति । सुणेमि । नमादित्वात्, सुणिमो । सुणेहि, सुणेह, सुणाह ॥

सुणस्य सोच्छि ॥३।१।१६२॥

सुणधातो' स्सप्रत्ययसहितस्य सोच्छि इत्यादेशो वा स्यात् । सोच्छिइ । सुणेस्सामो । हर हरणे । हराहि । हरेज्जा । अवहरइ । अवहरिंसु । आहरेइ । आहरेमि, आहारेमि । आहारिज्जा । आहारे । उद्धरमि । नमादित्वात्, उद्धरिमो । उदाहरे, उयाहरे । उदाहरिस्सामि । णिहरइ,

निहरेइ नीहरंति । पडिसाहरति । पच्चुद्धरिस्सामि । परिह-रेइ । विहरइ, निहरेइ । विहरिज्जामि ॥

॥ इति चैकत्पिकैकारविकरणाश्वादिस्तृतीयगण ॥



# अथ प्रेरणाप्रत्ययान्तप्रक्रिया ॥

### प्रेरणायामाव. ॥३।२।१॥

धातुभ्य स्वार्थप्रयोजकव्यापाररूपप्रेरणार्थे आवप्रत्ययः स्यात्स्यादिप्रत्यये परे । अच्छावेइ । अज्जावेइ ॥

### अर्हेरावन्तावच ॥३।२।२३॥

अर्हेरपसर्गात्परस्येधातोरयादेशः स्यात् ण्णिपरकावप्रत्यये । अज्झपाविन्ति ॥

### पात्कटात्सर्वस्य ॥२।४।१०७॥

पपूर्वकात्कटधातो. परस्यावप्रत्ययस्य सर्वस्य लोपः स्यात् । पयट्टेमि । पयट्टसु ॥

### आवश्च कंगादिभ्य ॥३।२।३॥

कराादिधातुभ्य' प्रेरणायामावप्रत्ययश्चकारादादिस्वरस्य वृद्धि' पर्यायेण स्यात् ॥

### करगलोज्जलपज्जलविहडानामावे वा ॥३।२।४॥

एषामादिस्वरस्य वृद्धिर्वा स्यादावप्रत्यये ॥

* कर, गल, उज्जल, पज्जल, भम, गम, परिगम, विहट, ण्य-फलाय ॥

करादावस्यात ॥४।४।१०६॥

करधातोः परस्याप्रत्ययस्यादेराकारस्य लोपो वा स्यात । प्रेरणार्थरूपप्रत्ययसञ्ज्ञितस्य करादित्यादेःप्रत्यय । कारावेइ, करावेइ, कारेइ, कारवेइ । कारवेमि । कारवे । कारावेइ, कारवेइ, कारेइ । उवक्खडावेइ, उवक्खडाविन्ति । उवक्खडावेहि, उवक्खडावेइ । पडियारेइ । पुक्कारेन्ति । सक्कारइ, सक्कारेइ, सक्कारेन्ति, सक्कारेन्ति । सक्कारेमि, सक्कारेमो । सक्कारए, सक्कारिज्जा । सक्कारेहि । सक्कारहिन्ति ॥

कुप्पस्य पयोरिते च व ॥३।२।५॥

कुप्पधातोरितप्रत्यये चकारात्प्रेरणार्थे पकारस्य व स्यात् । कोवए, कोवइज्जा । सेनावेइ ॥

पाक्खिवस्य च्छ ॥३।२।६॥

पकारोपसर्गात्परस्य क्खिवधातोः प्रेरणायां च्छादेशो वा स्यात । पच्छारेइ । पक्खिवावेइ ॥

खमादीनामादेर्वृद्धि ॥३।२।२॥

प्रेरणायां खमादीनामादिस्वरस्य वृद्धि स्यात् । आद्यस्यापवाद । खामेइ । खांमेइ ॥

* खम सम्-कम, विलम्ब, निग्गह, कुप्प, कित्तय, गुर, गल, आ गम, गाह, उद्-घट, सम्-घट, चर, चल, निर्-जम, उद जाय, नि-क्कम, तर, तव, तुस, तस, दिम, नद, नम, नस्स, उप्-पज, उप-पज्ज, निर्-पज्ज, स पडि पज्ज, पड, फुर, फुस, परि भव, सम् भर, भव, मर, लभ, लुभ लुभ, आ लोक, आ रिय, अभि-वद, वट्ट, वद, वस, वर, वय, वह, निर्-वह, नि वह, सम्-वह, सिम, अणु गर सिम धीर,,

## च्छोलादिभ्यो य ॥३।२।१६॥

एभ्य. प्रेरणार्थे यप्रत्ययश्च स्यात् । उच्छोलयति ॥

## आवे जादीनामेकादेशस्य ह्रस्व ॥३।२।१७॥

जादिगणपठितानामावप्रत्यये परे एकादेशस्याकारस्य ह्रस्वो वा स्यात् । जवेन्ति, जाविन्ति, जावेन्ति ॥

## उज्जोयज्झामयोर्वलोपौ ॥३।२।३७॥

अनयोरुपधाया वकारलोपौ वा स्याता प्रेरणायाम् । उज्जोएइ, उज्जोवेइ ॥

## ज्झामस्येजे ॥३।२।१८॥

ज्झामधातोराकारस्य ह्रस्वो वा स्यादिज्जे परे । विज्झाएज्जा, विज्झवेज्ज, विज्झविज्जा । उवट्ठावेइ । उवट्ठाविन्ति । उवट्ठावएज्जा । उवट्ठावेह । पट्ठावेज्जा । तोसइ । अभितासएज्जा । निद्दावए । परिहावेइ ॥

## समो नद्धस्य दधयोर्ह ॥३।२।१९॥

सम. परस्य नद्धधातोर्दकारधकारयोर्हकारः स्यात्प्रेरणा-

---

न्वय, पडि-लड, आ-सर, प सद, सद, उव-सम, ओ सम, नि-मम, वी-सन, मग, आ-सर, ओ सग, प-सर, पडि मर, सव, तिरख, मिन्व नि सीय, सुन्क, वि-सुय, सेह, सोय, आ-स्सम, वि स्मस, प-हग, सम्-आ हग, आ-हर, विग्-हर, प हर, हा, एते, खमादय ॥

---

+ च्छाल, नग, पीम, पुड, रज्ज रम, लूम, वग, तिस, मर, हर, एते च्छानाय ॥

---

* जा, दा, हा, ठ, ग, निग्-वा, लुभ एते जादय ॥

याम् । सन्नाहेइ, सण्णाहेट, मण्णाहेन्ति॥

नस्से दीर्घात्॥३।२।२९॥

नस्मघातुमम्यन्भिगो दीर्घात्परस्य मयुक्तस्याद्वेर्लोपः स्यात। नामिज्जा। पगासेइ। उवाइगासेइ, उवाइणावेति॥

न्हो ण आवस्य ॥३।२।३३॥

न्हाधातो परस्यावस्योपधाया णकारो वा स्यात्। ण्हावेइ, पहावेन्ति, ण्हावेन्ति। ण्हाणेइ॥

पज्जस्य पय ॥३।२।१०॥

पज्जधातो पयादेशः प्रेरणायामर्थे। उप्पाएइ, उप्पाएन्ति। उप्पाएज्जा। विगाएमि। पाडेइ। पाडेसि॥

उपसर्गात्पडस्य त ॥३।२।३४॥

उपसर्गात्परस्य पडधातोरुपधायास्तकारादेशः स्यात्प्रेरणायाम्। अइवाइज्ज॥

नेर्वा ॥३।२।३५॥

ने परस्य पडधातोरुपधायास्तकारादेशो वा स्यात्प्रेरणायाम्। निवायए, निवायएज्जा, निवातएज्जा॥

पान्न ॥३।२।३६॥

पकारोपसर्गात्परस्य पडधातोरुपधायास्तकारादेशो न स्यात्। पवाडेइ, पडिवायन्ति॥

पो डज़ि ॥३।२।१४॥

पाधातोर्डज़िप्रत्ययो वा स्यात्प्रेरणायामर्थे। पज्जेइ, पज्जेन्ति पियावए, इत्यादि॥

एन्तहिम्बिडंजे ॥३।२।१५॥

ए-न्त-हिप्रत्ययेषु परेषु डजिप्रत्ययस्यादेरिकारः स्यात् । पिअे । पिअहि । फोडेन्ति । थीहावेइ ॥

थीहस्येजे भेस सावस्य ॥३।२।१६॥

प्रेरणायामावसन्तिस्य थीह्धानोर्भेसादेशः स्यादिजप्रत्यये । भेसेज्जा । थोहेइ, थोहेन्ति । थोहेहि । पडिथोहेइ, पडिथोहइज्जा ॥

भमाड्ड ॥३।२।३७॥

भमधानो' परस्यावस्योपधाया डः स्यात् । भमाडेइ । भमाडेसु ॥

भुजस्य भोयो वा ॥३।२।१७॥

प्रेरणायामर्थे भुजधानोर्भोयादेशो वा स्यात् । भोयावेइ । भुजावेइ । भोयावेज्जा, भोयए ॥

पान्मुचास्ससस्य खङ् ॥३।२।१८॥

पकारोपसर्गात्परस्मान्मुश्चधातोः परस्य ससस्य खङ् स्यात्प्रेरणायाम् । पमुक्खसि ॥

रञ्जस्येते च रज ॥३।२।२०॥

रञ्जधातो रजादेशः स्यादिते परे चात्प्रेरणायाम् । रजयन्ति ॥

रुहस्य व. ॥३।२।३८॥

रुह्धातोरुपधाया वकारादेशः स्यात्प्रेरणायाम् । रोवावेइ । ववरोवेइ, ववरोवेति, ववरोवेन्ति । ववरोवेमो । ववरोवेज्जा । ववरोवेह । रूसयन्ति ॥

वड्ढस्य धो णमाणयोश्च ॥३।२।२६॥

अस्योपधाया धकारो वा स्यात् णमाणया परयोश्चाप्रेरणायाम् । वद्धावेइ, वद्धावन्ति, वद्धाविन्ति, वड्ढावेन्ति । वद्धावेहि । अणुप्पवेसेइ । अभिनिवेसए । णिवेसइ, णिवेसन्ति । निवेसेइ, निवेसयन्ति । उपधाया इत्यधिकृत्य,

व्वयस्य वः ॥३।२।३२॥

व्वयधातोरुपधाया वकारादेश स्यात्प्रेरणायाम् । पव्वावेइ । पव्वावेज्ज । सारयति, सारयन्ति ॥

औ च सुज्झस्य सोह ॥३।२।१३॥

प्रेरणार्थे इप्रत्यये च सुज्झधातो सोहादेश स्यात् । सोहेइ । विसोहेइ । विसोहेमि । विसोहिज्ज, विसोहेज्ज, विसोहेज्जा, विसोहए । आसासेइ, आसासन्ति ॥

आज्ञायामात स्ससात्सेर्डिस् ॥३।२।३०॥

आज्ञायामाकारात्परस्य स्ससधातो सिप्रत्ययस्य डिसादेश' स्यात् । अस्सासि, आसासि ॥

॥ इति प्रेरणाप्रत्ययान्तप्रक्रिया ॥

## अथ क्रियासमभिहारप्रक्रिया ॥

व्यञ्जनादेर्द्वि क्रियासमभिहारे ॥३।१।१७६॥

व्यञ्जनादिकस्य धातो' क्रियायाः पौन पुन्येऽतिशये वा द्योत्ये उपधाया द्वित्व स्यात् ॥

आदे सस्वरस्य ॥३।१।१७७॥

उक्तार्थे धातो सस्वरस्यादेर्व्यञ्जनस्य द्वित्व स्यात् ॥

द्विरुक्तस्यादेर्वृद्धिः ॥३।१।१७८॥

तस्मिन्नर्थे द्विरुक्तस्यादिस्वरस्य वृद्धिः स्यात् ॥

लवस्य पो वहुलम् ॥३।१।१७९॥

लयशतार्थस्य पो बहुलं स्यात् । लालप्पमाणो । लोलुप्पमाणो । जायाई ॥

क्रमस्य चकम ॥३।१।१८०॥

उक्तेऽर्थे क्रमधातोश्चकम इत्यादेशः स्यात् । चकमन्तो । चंकम्ममाणो । चकमिया चङ्क्रम्येत्यर्थ ॥

॥ इति क्रियासमभिहारप्रक्रिया ॥

## अथ नामधातुप्रकरणम् ॥

आयस्तत्करोति ॥३।१।१८१॥

द्वितीयान्तान्नाम्नः करोतीत्यर्थे आयप्रत्यय स्यात् ॥

आयान्ताश्च ॥१।१।१५॥

आयादिप्रत्ययान्ता धातुसंज्ञाः स्युः । अत्ताण उस्सुय करेति=उस्सुयायति ॥

अस्सुयान्माण आयस्य ॥४।४।१०८॥

उस्सुयशब्दात्परस्यायप्रत्ययस्य लोपः स्यान्माणप्रत्यये । उस्सुयमाणो ॥

अनुकरणधवलादिभ्यश्च ॥४।४।१०९॥

अनुकरणशब्दाद्धवलादिभ्यश्च परस्यायप्रत्ययस्य लोपः

---

* धवल, भारहल, तरव, तणु, दाह, पमुल, पवित्त, पीय, मइल, विभग, निउम, मिट्ठिल, एते धवलाद्य ॥

स्यात्। घयलइ। झलग्गलइ। कटकटति, कटकटन्ति। आयप्रत्ययान्तानां केषाञ्चित्करादित्वादेप्रत्यये, टिट्टियावेइ। लडयेन्ति। तणुयन्ति। थक्कारेन्ति॥

पसुलादिभ्याष्टिमन्तार्थयोश्च ॥४।४।११०॥

एभ्यः परस्य मन्तप्रत्ययार्थप्रत्ययस्य टेश्च लोपश्चकारादायस्य लोपः। पसुलं करोति=पसेइ॥

पवित्तस्य न्ते ॥४।४।२०॥

अस्य यगागमः स्यात् न्तप्रत्यये परे। पवित्तयन्तो॥

ममाद्न ॥४।४।११२॥

अस्मात्परस्यायप्रत्ययस्य लोपो न स्यात्। ममायए, ममायन्ति॥

मिसिमिसेर्माणे दीर्घश्च ॥४।४।२१॥

अस्य माणप्रत्यये परे दीर्घोऽन्त्यादेशश्चकाराद् यगागमो वा स्यात्। मिसिमिसीयमाणो, मिसिमिसेमाणो, मिसिमिसमाणो॥

उपमानादाचारे ॥३।१।१८२॥

उपमानवाचकाद्धाम्न आचारेऽर्थे आयप्रत्ययः स्यात्। विज्जायन्ति॥

आये विज्जोर्विज्जुयो वा ॥३।१।१८३॥

विज्जुशब्दस्यायप्रत्यये परे विज्जुय इत्यादेशो वा स्यात्। विज्जुयायन्ति॥

### विउसस्य द्विः सस्य ॥३।१।१८४॥

विउसशब्दस्य सकारस्य द्वित्वं स्यादाप्प्रत्यये परे। वि॰उस्सन्ति ॥

### घुत्तादार ॥३।१।१८५॥

घुत्तशब्दादुक्तेऽर्थे आरप्रत्ययः स्यात्। घुत्तारसि ॥

॥ इति नामधातुप्रकरणम् ॥

---

## अथ भावकर्म्मप्रक्रिया ॥

### भावकर्म्मणोरिज्ज ॥३।२।४०॥

भावकर्म्मवाचकत्यादिप्रत्यये परे धातोरिज्जप्रत्ययः स्यात्। वि+अज=वजिज्जइ। अचिज्जइ ॥

### क्रिणादीनामादिरहितानामिज्जे लोप ॥३।२।४६॥

क्रिणादिगणपठितानामादिवर्जितानां लोपः स्यादिज्जप्रत्यये भावकर्म्मणोः ॥

### कत्तादिभ्योऽत् ॥३।२।४१॥

कत्तादिगणपठितेभ्यो धातुभ्यो भावे कर्मणि चात्प्रत्ययः स्यात् ॥

---

* क्रिण, कर, प कम,चिण, छिन्द, परा जिण, भिद, मर,एम क्रिणादय ॥

---

× कत्त, कर, क्खिव, अधि-गम, गिण्ह, घस, चक्कम, च्छुप, जिण, जुन, डह, त्थुण, न दिस, दव, दह, धरिस, धुण, नम्स, पूर, बध, भण, भज, भुज, मुच, रंभ, रुम, लिप, लुप, लोक, वध, वह, मिन, मुम, हण, हर, हम, एम कत्तादय ॥

करस्य वा ॥३।२।५०॥

करधातोरिकारोऽन्तादेशो वा स्यादति परे ॥

करहरादिसानामीरादे स्वरस्य ॥३।२।५१॥

एषामादे स्वरस्येकारो वा स्यादति परे ॥

ड कत्त-गिण्ह-डह-दहह-वहानामति ॥३।२।४६॥

एषामिकारोऽन्तादेश स्यादति परे। किणइ, किणन्ति ॥

कराइा ॥३।२।४२॥

करधातो कर्मणि विकल्पेनाप्रत्यय स्यात्त्यादौ। किज्जइ, कज्जइ, कज्जति। कीरइ। किज्जन्ति, कज्जन्ति, कीरन्ति। कीरए। किज्जउ। कज्जिस्सइ। घिप्पारिज्जइ। किज्जन्तु। आरिज्जइ, आरिज्जन्ति, आघविज्जन्ति ॥ उपधाया इत्यधिकृत्य,

स्निवस्य पोऽडयो ॥३।२।६५॥

अस्यापधाया पकार स्यादति प्रत्यये डप्रत्यये च। स्निप्पइ। सिप्पउ॥

रुत्रात्टुहोभ्य इजस्य ॥३।२।५५॥

एभ्य परस्येजप्रत्ययस्यादेर्लोप स्यात्। रज्जइ ॥

गमदिनामति द्वि ॥३।२।६६॥

एषामुपधाया द्वित्व स्यादप्रत्यये। अधिगम्मइ ॥

---

* गम स्निव, चकम, कड्ढ, जिण, जुज, दह, त्थुग, दर, मि, धम, धुण, बध, भग, भज, भुन, मुच, रम, रभ, लम गिर लुप, लाक, बह, पिच मुण, हय, हर, एते गमाद्य ॥

गादिभ्यो य ॥३।२।४३॥

एभ्यः कर्मणि यप्रत्ययो वा स्यात्। पक्षेऽज्जप्रत्ययः ॥

गावाहो ये ॥३।२।५२॥

एषामीकारः स्याद्यप्रत्यये परे। उवगीयमाणो ॥

गिण्हस्य घेप्प. ॥३।२।५४॥

गिण्हधातोर्घेप्पादेशः स्यादप्रत्यये। ह्रस्वविकल्पात्, घिप्पइ, घेप्पइ। घेप्पेज्ज ॥

अभिघट्टादिय ॥३।२।४४॥

अभिपूर्वकघट्टधातोरियप्रत्ययः स्यादुक्तेऽर्थे। अभिघट्टियमाणो ॥

घसादण् ॥३।२।८५॥

अस्मादुक्तेऽर्थेऽण्प्रत्ययः स्यात्। घासति, चिज्जन्ति। अवचिज्जन्ति। सचिज्जन्ति। छिज्जइ, छिज्जन्ति। छिज्जेज्ज। कादित्वात्, छिज्जिही। वोच्छिज्जिहिन्ति ॥

जिणान्म प्रवर्त्तनायाम् ॥३।२।५६॥

प्रवर्तनार्थे जिणधातोरम्प्रत्ययः स्यात्कर्मणि। एदिज्जयोरपवादः ॥

जिणस्य चः ॥३।२।८७॥

जिणधातोरुपधायाश्चकारः स्यादप्रत्यये। जिचं। "कह-

+ गा, लस्ख, था, श्रा, हा, एते गादय ॥

* कह नु जीयेतेदृक्ष (जीयते ईदृक्ष) जीयमानो न सन्ति ॥ (उन० ७ २२)।

ण्णु जिवमेलिक्कउ, जिवमाणो न सविदे" । डज्झइ, डज्झन्ति । डज्झेज्ज । डज्झिहो ॥

तरस्य वा ॥३।२।४८॥

तरयामोरादिवर्जितस्य लोपो वा स्यादिज्जे । तिज्जइ । तरिज्जइ ॥

स्थुणधुणसुणाना व ॥३।२।६८॥

स्थुणधुणसुणधातूनामुपधाया वकारादेश. स्यादकारे प्रत्यये । थुव्वइ ॥

ह्वस्य दुय ॥३।२।५७॥

अस्य धातोर्दुयादेश स्यादप्रत्यये । दुयण ॥

धरिसस्य धास ॥३।२।५८॥

अस्य धास इत्यादेश. स्यादप्रत्यये । धासति। धुव्वण। पण्णायइ, पण्णायति, पण्णायन्ति । पक्षे, णज्जइ, नज्जइ, नज्जण ॥

इज्जे दीर्घ फासस्य ॥३।२५९॥

फासधातोर्दीर्घोऽन्त्यादेश स्यादिज्जे परे । फासाइज्जमाणो ॥

वधस्य झ ॥३।२।६९॥

वन्धधातोरुपधाया झकारादेश स्यादप्रत्यये । वज्झइ, वज्झन्ति । भज्ज, भण्णइ, भण्णाति । मिज्झइ, मिज्झन्ति ॥

उदोपडिभ्यो मो मिण ॥३।२।६०॥

उद्-ओ पडिभ्यो माधातोर्मिणादेशः स्यादिज्जे । उम्मिणिज्जइ । ओमिणिज्जइ। पडिमिणिज्जइ ॥

## लक्खाद्यस्येट् ॥३।२।६२॥

लक्खधातोः परस्य यप्रत्ययस्येडागमः स्यात्। लक्खिज्जइ। लक्खियसि॥

## न्तेर्लंभादे. ॥३।२।७०॥

लभधातोः परस्य न्तिप्रत्ययस्यैकारान्तादेशः स्यात्कर्म्मणि। उवलब्भन्ते॥

## वस्योसतयोर्वभस्य ॥३।२।६३॥

वभधातोर्वस्योसादेशो वा स्याद्यप्रत्ययतप्रत्यययोः। पक्षे,

## आदेरस्य ॥३।२।६४॥

वभधातोरादेरस्योकारः स्याद्यप्रत्ययतप्रत्यययोः उब्भइ, उब्भति, उब्भए। वुब्भइ, वुब्भति, वुब्भए, वुब्भन्ति। पवुब्भइ। सुब्भइ, सुब्भन्ति॥

## हणस्य मः ॥३।२।७१॥

हणधातोरुपधाया मकारादेशः स्याद्यप्रत्यये। उवहम्मइ, उवहम्मन्ति। पडिहम्मति। पडिहम्मिहिति, पडिहम्मिस्सइ। विहम्मसि। विणिहम्मन्ति, अवहीरन्ति, अवहीरेन्ति। पहरिज्जइ। पहीयए। हुज्जामि॥

॥इति भावकर्मप्रक्रिया॥

इति श्रीलोङ्कागच्छान्तर्गतलिम्बडीसम्प्रदायतिलकायमानपूज्यपादश्रीगुलाबचन्द्रजित्स्वामिचरणाम्बुजचञ्चरीकमुनिश्रीरत्नचन्द्रविरचितायां जैनसिद्धान्तकौमुद्यामाख्यातप्रक्रिया समाप्ता॥

# अथ कृदन्ते सम्बन्धार्थप्रक्रिया ॥

कृत् ॥३।३।१॥

धात्वधिकारे वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञाः स्युः ॥

कर्त्तुरभेदे पूर्वकाले त्तात्तूणेया ॥३।३।२॥

क्रिययोः कर्त्तुरभेदे पूर्वकाले वर्त्तमानाद्धातोस्त्ता-त्तु-उ-ऊण इय एते प्रत्ययाः स्युः । एकारविकरणे सयुक्ते ह्रस्वविकल्पे च, करित्ता, करेत्ता । कराविऊण, काराविऊण, करिय । गहिउ । चइत्तु ॥ उपधाया इत्यधिकृत्य,

कारवस्य यो वा त्तान्तयोः॥३।३।५७॥

प्रेरणार्थकप्रत्ययविशिष्टकरधातोरुपधाया वकारस्य यकारो वा स्यात् त्तान्तप्रत्यययोः । कारयित्ता ॥

पाउकरादे ॥३।३।३॥

पाउपूर्वकात्करधातोस्त्तादिविषये एप्रत्ययः स्यात्। पाउकरे प्रादुष्कृत्येत्यर्थः ॥

अञ्जस्य त्ति णक् ॥४।४।४२॥

अञ्जधातोस्त्ताप्रत्यये परे णागमः स्यात् । अञ्जणित्ता। संपूर्वकस्येणादेशो, समञ्जिणित्ता ॥

उपसर्गाड्डो वा ॥३।३।४॥

उपसर्गपूर्वकाद्धातोरुक्तेऽर्थे डप्रत्ययो वा स्यात् ॥

इप्रभृतिभ्यश्च ॥३।३।५॥

इप्रभृतिभ्यो धातुभ्योऽपि डप्रत्ययः स्यादुक्तेऽर्थे ॥

* इ, का, गिण्ह, चय, जय-यागे, छिन्द, ठा, दा, ना, पिव, भिद, भुज, मच, सु, सुण, हण, हा, एते इप्रभृतयः ।

इकाट्ठादाल्लावुसुहाभ्यश्चिङ्स्य ॥४।४।८५॥

एभ्यः परस्य इप्रत्ययस्य चिडागमः स्यात् । इचा ॥

अतेरेयो डे ॥३।३।६॥

अतिपरस्येधातोर्यकारादेशः स्याद् डप्रत्यये । अइयध । पडियध । अहीउ,अहिजिउ, अहित्ता, अहिज्जिऊण, अहिज्ज, अहिज्जित्ता ॥

पडेरेकादेशस्योत् ॥३।३।७॥

पडेरुपसर्गस्येधातोश्चैकादेशभूतेकारस्योकारः स्याड्डप्रत्यये । पडुच ॥

पतेर्दीर्घस्त इट् ॥३।३।८॥

पतिपूर्वकस्येधातोर्दीर्घः स्यात् त्ताप्रत्ययस्येडागमश्च । पत्तियाइत्ता । पेच, पेचा । समिचा , समेच । समुचिच ।

पेसादेरियस्यादित ॥३।३।१०॥

पेसादिगणपठितेभ्यो धातुभ्यः परस्येयप्रत्ययाद्यवयस्येकारस्याकारः स्यात् । प+इस=पेसाय । जहाय । विप्पजहाय । आयाय । समुदाय । पडिसमाय । विनियाय । गहाय । आघायाय ॥

पेहादिभ्यो यस्यैत् ॥३।३।११॥

एभ्यः परस्येयप्रत्ययस्य यस्यैकारो वा स्यात् । पेहाए,

---

+ प इस, प इक्ख, गह, घात, जहा, वि प्प-जहा, आ-दा, सम्-उ-दा, पडि सम धा, वि नि-धा, एते पेसाद्य ।

---

* प ईह, प माग, गि ध्मार, एते पेहाद्य ॥

पेहाय । संपेहाए, सपेहाय । पसारिए । "पाए पसारिए वा-वि, न चिट्ठे गुरुणंतिए"[×] ॥ णिस्साए ॥

इ काद्वयो ॥३।३।१२॥

काद्वाधात्वोरिकारोऽन्तादेश स्यात्क्त्वप्रत्यये । किचा, किच । ठिचा, ठिच । वा० ( काहराभ्यां ह्रस्वलोपश्च वक्तव्यः ) कट्टु । हट्टु ॥

किट्टादिभ्यस्तयोर्य ॥३।३।६१॥

किट्टादिगणपठितधातुभ्य परस्य क्तप्रत्ययस्य द्वयोस्तकारयोर्यकारादेशो वा स्यात् । किट्टित्ता, किट्टिया । पेहिया । सपेहिया । क्त्वस्योपधायाः पादेशो, उक्खिप्प ॥

गममन्नादिसहणेभ्यस्तातुतव्वाडितोऽनिटो णन्न-योर्म ॥३।३।१६॥

गम्य' पर एते प्रत्यया डितोऽनिटश्च स्युर्णन्नयोर्मकारादेशश्च स्यात् ॥

त्तात्त्वोरादितलोप ॥३।३।१७॥

गम्य. परयोस्तातुमत्ययोरादेर्लोप' स्यात् । गता ॥

आतो गमात्तो वेट् ॥३।३।२२॥

आत. परस्माद्गमधातो परस्य क्तप्रत्ययस्येडागमो वा

---

× पादौ प्रसार्य वापि न तिष्ठेद्गुर्वन्तिके ॥ उत्त० १–१६ ॥

---

१ कि', प-इह, जाण, उद्-जाल, प-मुल, ओ-तार, आ ताव, तुन्न, सम् धङ्, धुण, पज्ज, पाल, फास, बुज्झ, भुज, लग, लभ, रा, वार, निर्-वार, मक्ख, सन, मिच, मेह, साह, हण, हर, हूण, एते किट्टादय ॥

स्यात् । आगमित्ता, आगन्ता, इडागमे तकारस्थानादित्वान्न लोप. ॥

गमगिण्हलुभदिसवुसुचलभेभ्यस्तोरनुस्वारः ॥३।३।२३॥

एभ्यो धातुभ्यः परस्य तुप्रत्ययस्यानुस्वारान्तागम. स्यात् । गतुं । अन्भुगतुं ॥

गमगिण्हच्छिदभिदेभ्यो वा ॥३।३।२७॥

एभ्यः परस्त्रोणप्रत्ययस्य तडागमो वा स्यात् ॥

ऊणस्य वा ॥३।३।२४॥

ऊणप्रत्ययस्यानुस्वारान्तागमो वा स्यात् । गन्तूण, गमिऊण ॥

डस्येऽकस्माद्दीर्घश्च वा ॥३।३।२८॥

कम्भिन्नधातोः परस्य डप्रत्ययस्येडागमः स्याद्विकल्पेन दीर्घश्च । उवड्ढ । पकन्थ । अइकम्म । आगम्म । अकरादिति किम् ? अभिकम्म ॥

तुंतूणतव्वेसु घेत् ॥३।३।२९॥

गिण्हधातोस्तुतूणतव्वप्रत्ययेषु घेतादेशः स्यात् । घेत्तुं, घित्तुं, घेत्तूण ॥

गिण्हस्य णलोपोऽडयो ॥३।३।२६॥

गिण्हधातोर्णकारस्य लोपः स्याद्डयोः परयोः । गिज्झ । परिगिज्झ ॥

उपसर्गादिये गिज्झ ॥३।३।२०॥

उपसर्गात्परस्य गिधृधातोर्गिज्झादेशः स्यादियप्रत्यये। आगिज्झिय। निगिज्झिय। परिगिज्झिय॥

वेश्चिन्तस्येरहितस्येयत्त्वे ॥३।३।२३॥

वेरुपसर्गात्परस्य चिंतधातोरिकाररहितस्य लोपः स्यादियत्तुप्रत्यययोः परयोः। अणुचीइत्तु, चीइय॥

अणोर्यस्य च ३।३।२४॥

अणुविपूर्वकस्य चिन्तधातोरियप्रत्ययस्य यकारस्य चकारादिरहितस्य लोपः स्यात्। अणुचीइ॥

उदस्ति ॥४।४।९७॥

उद् परस्य चिणधातोरिणस्य लोपः स्यात् क्त्वाप्रत्यये परे। उचित्ता॥

उमूणयोर्निर ॥४।४।९६॥

निर् परस्य चिणधातोरिणस्य लोपः स्यादुम ऊणयोः परयोः। निच्चिउ, निच्चिऊण॥

थयाछिदपिबभिदभुजहराणां डे च ॥३।३।५८॥

एषामुपधायाश्चकारादेशः स्याड्डप्रत्यये।

छिकस्य त्ति दीर्घकलोपौ ॥३।३।१५॥

छिकधातोरिकारस्य दीर्घः ककारस्य लोपश्च स्यात् त्ताप्रत्यये। छीत्ता॥

चयस्यादे ॥३।३।१३॥

चयधातोरादेरकारस्येकारः स्याड्डप्रत्यये। चिच्चा।

परिव्वयस्य ज* ॥३।३।५६॥

परिपूर्वकव्वयधातोरुपधाया जकारादेशः स्याद्धुप्रत्यये। परि-
वज्ज। विभज्ज॥

छुभभुजमुचादिसलभेभ्यस्तडूणस्य ङिच्च ॥३।३।२६॥

एभ्यः परस्योणप्रत्ययस्य तडागमः स्यात्स च ङित्।
इडोऽपवादः॥

तुत्तूणयोश्छुभस्य छोहः ॥३।३।२५॥

छुभधातोश्छोहादेशः स्यात् तुत्तूणयोः परयोः॥

छुभदिसमुचपरिभुजलभेभ्यस्तुः ॥३।३।१८॥

एभ्यः परस्तुप्रत्ययो ङिदनिट् च स्यात्। छोढु, छोढूण॥

ऊणे निरो जिणस्य ॥४।४।६८॥

निर. परस्य जिणधातोरिणस्य लोपः स्यादूणप्रत्यये।
निज्जिऊण॥

यागे जयस्य जिठ ॥३।३।१४॥

जयधातोर्जिठादेशः स्याद्यागेऽर्थे डप्रत्यये परे। जिट्ठा॥

ट्ठवरोहयो. प ॥३।३।६०॥

अनयोरुपधायाः पकारादेशः स्याद्धुप्रत्यये। परिट्ठप्प।
आरोप्प॥

तक्कादिभ्यो णङ् मपरको वा त्त ॥४।४।४७॥

एभ्यो धातुभ्यः परस्य त्ताप्रत्ययस्य णागमः स्यात् स
च विकल्पेन मपरकः स्यात्। तक्कियाण। णिद्दुणित्ताण।

---

* तक्क, घुण, पील, लन, वज, मा, एते तक्कादयः।

१ आरोप्य उपागमाय।

ध्यार्गालियाण । परिवालियाण । परिवञ्चियाग । परिग्गविःयाण ॥

उमि समस्थोस्त्थुणस्य सेट ॥३।३।३६॥

मम परस्य त्थुणधातोरिट्सहितस्य थो इत्यादेश स्यान्तुमि परे । मथाउ । वा० (त्तिस्यमस्यादेशो वा वक्तव्य)। उट्ठभिया ॥

दिसात्तव्यतारत्तुतूणाना तस्य ठोऽदितः ॥३।३।३७॥

दिसधातो परपामेषा तकारस्य ठकारो दिसस्येकारस्याकारश्च स्यात् । दट्ठु, दट्ठूण । दिस्स । दिस्सा । पदेस्सा ॥

उदो धरात्तो ॥३।३।२५॥

उत्पूर्वकधरधातोः परस्य त्तुप्रत्ययस्यानुस्वारान्तागमो वा स्यात् । उद्धत्तुं, उद्धत्तु ॥

धुणस्य धूय सेयस्य ॥३।३।३८॥

इयप्रत्ययसहितस्य धुणस्य धूयादेशो वा स्यात् । निद्धूय । संविहूय । संनिधुणिय ॥

वेनेरदिट् त्तो ॥३।३।३६॥

वे परस्य नेधातोरकारोऽन्तादेशस्त्तोरिडागमश्च । विणइत्तु ॥

डेरिये ॥३।३।४२॥

वे परस्मान्नेधातोरेकारादियप्रत्ययावयवेकारे परे पूर्वपरयोरीकारादेश स्यात । विणीय ॥

---

१ अनिट्वाप्तिव्रमानां ग्रहणम् ॥

न्तेययोश्चानो ॥३।१।८०॥

अनोः परस्य पासधातोरुपधाया वित्व स्यात् न्त-इयम-त्ययोः परयोश्चकारादिनि परे । अणुपस्सिय ॥

योरावस्य याद् ॥३।३।४३॥

युधातोः परस्यायपत्ययस्य यादागमः स्यात् त्वाप्रत्यये । युयायित्ता ॥

भुजस्य भोत्ति ॥३।३।४७॥

भुजधातोर्भो इत्यादेशो वा स्यात् त्वाप्रत्यये परे । भोइ-त्ता, भुजित्ता, भुजिया ॥

भुंजात्तारश्च ॥३।३।४४॥

भुंजात्तारप्रत्ययश्चकारात् त्तूणप्रत्ययो णिन् स्यात् । भो-त्तूण ॥

अनिटो त्तएत्तु ॥३।३।४५॥

भुजधातोः परावनिटावेतौ णिनो स्तः । परिभोत्तु । के-वलात्त्तोः, सेट्त्वात्, भुंजित्तु । वा० ( ममे अस्य तो वा-वक्तव्यस्ति ) मत्ता, मता ॥

मुचात् त्तूणो णित् ॥३।३।४३॥

अस्मात्परस्तूणप्रत्ययो णित् स्यात् । मोत्तु, मोत्तूण, मुत्तूण ॥

मुज्झस्य मोहोऽतव्वे कृति ॥३।३।४१॥

मुज्झधातोर्मोहादेशः स्यात्तव्वभिन्ने कृति परे । निमो-हित्ता ॥

आतो रभस्य ढत्त सडस्य ॥३।३।४८॥

आकारात्परस्य रभधातोर्ह्रप्रत्ययसहितस्य ढत्तमिति व निपात्यते । आढत्त । "इतो आढत्त" । समारभ्य, समार भित्ता । सलप्प ॥

अत्तयो केवलस्य ॥४।४।३६॥

उपसर्गरहितस्य लभग्रालोर्लस्यानुस्वारागमो वा स्याद् अत्ताप्रत्यययो. परयोः । लम्भित्ता, लभित्ता, लद्ध, लद्धूण ॥

अभेस्त्ति ॥४।१।३४॥

अभेः परस्य वड्ढधातोरादेरकारस्योकार' स्यात् त्ताप्रत्य- ये पर । अभिवुड्ढित्ता ॥

नेस्तातित्तामाणेषु ॥४।१।३५॥

ने परस्य वड्ढधातोरादेरकारस्योकार' स्यात् त्ताप्रत्यये माणप्रत्यये तयोश्च । णिवुड्ढित्ता ॥

अभेरूणे वन्दस्य वा ॥३।३।५०॥

अभेरुपसर्गात्परस्य वन्दधातोर्वादेश. स्याद् ऊणप्रत्यये परे । अभिवाइऊण ॥

वरस्य वासस्तेतो ॥३।३।५२॥

वरसधातोर्वासादेश स्यात त्ताप्रत्ययेतप्रत्यययो परयोः वासित्ता । विदित्ता, विइत्ता ॥

ओ समस्य वस्तोतयो ॥३।३।६३॥

ओकारोपसर्गात्परस्य समधातोम्पधाया वकार' स्यात त्ताइतप्रत्यययो' परयो । विओसवित्ता ॥

१ इत आरभ्य । ( पत्र० १८ ) ॥

